श्रीगणेशायनमः॥ ॥श्रीगोपीजनवल्लभायनः॥ ॥अथप्रायश्चित्तेंदुशेखरप्रारंभः॥ ॥बालेंदुशेखरंनत्वाबा
लबोधायलिख्यते ॥बालकृष्णमुदेचापिप्रायश्चित्तेंदुशेखरः॥१॥ यद्यथाविध्यननुष्ठानाद्युपचिताशुभनाशकमेवतत्प्रायश्चि
त्तम् ॥तुलापुरुषादावतिव्याप्तिवारणायएवेति॥ नतुलांतरजनकमित्यर्थः॥पापनिवर्तनक्षमधर्मोविशेषेयोगरूढोयंशब्दइ
तितत्त्वम्॥संकेतविशेषसंबंधेनप्रायश्चित्तशब्दवत्त्वमेवप्रायश्चित्तत्वम् ॥अतएवकृत्वंगप्येषप्रायश्चित्तेतद्व्यवहारइत्यन्ये ॥पा
पिनःप्रायश्चित्तंनित्यंनैमित्तिकंवेत्यतोविकलांगादपिपापस्यनाशः॥ किंत्वल्पस्यैवनतुसमग्रस्यएवंचकाम्यमप्येतत् ॥एवं
चप्रधाननिष्पत्तावपिनप्रधानहानिरितिबोध्यम्॥एकप्रायश्चित्तकनानापापकर्मणांतत्प्रायश्चित्तैकप्रयोगेणैवनाशः॥ एव
मधिकपापनाशार्थमुक्तेनैकवारमनुष्ठितेनन्यूननाशस्यापिपापांतरस्यनाशः॥ एवंयत्रयत्प्रायश्चित्तमुपदिष्टंतदन्यूनक्लेशक-
प्रायश्चित्तांतरमपितत्रयोज्यम्॥ पापिनांतदुपदेशश्चपुण्याय॥ सचार्चितेनपृष्टेनैवविदुषांसंसदिधर्मशास्त्रादिबुध्वैवकार्यः
॥अन्यथोपदेष्टाप्रत्यवैति॥ संसच्चतुर्भिस्त्रिभिर्वाधर्मशास्त्रादितत्त्वज्ञैर्भवतिएकेनापिब्रह्मविदायतिकज्येम् ॥सहस्राद्येकप
र्येनमित्येके॥ पर्षद्दक्षिणाचलक्षगवादिकिंचिद्द्रव्यपर्यंता॥यथायोग्यंकृच्छ्रसंख्ययावा॥ पर्षत्तुष्टिर्वा॥गौर्वृषभश्चेत्यन्ये॥न
वेदितदोषस्यपर्षदनुमत्यैवप्रायश्चित्तानुष्ठानंबोध्यम्॥पापीचसचैलंस्नातोवाग्यतः आर्द्रवासाउपदेष्टारंसाष्टांगंप्रणम्य
स्पष्टाभिधानंवदेदिदंमेपापंनिष्पन्नंप्रायश्चित्तंमेउपदिशत्विति॥पापंकृतवतोपरैर्ज्ञातदोषस्यचसभोपस्थानंविनाभोजनेप्रा

षणेचपापवृद्धिः॥ आसंवत्सरंप्रायश्चित्ताकरणेपापद्वैगुण्यम् । आर्त्तस्यप्रायश्चित्ताकथनेर्चितस्यविपश्चितस्तत्पापभागि
ताअज्ञात्वाकथनेच॥ शूद्रादेस्तुप्रायश्चित्तोपदेशोविप्रमंतराकृत्वाकार्यः॥ क्षत्रियवैश्ययोरप्येवं॥ गुरुणिपापेलघुलघुनि
चगुरुप्रायश्चित्तंनवाच्यम्॥ पापगौरवंतुकामतःसमत्ययंसाभ्यासमनुष्ठानाद्दंडगौरवात्सातिशयाच्चनिंदार्थवादाल्लोकग
र्हातिशयाच्चज्ञातव्यम्॥ लघुताप्येतद्विपर्ययेणज्ञेया॥ ॥प्रायश्चित्तंयथोक्तमेववाच्यम्॥ ॥नतुस्नेहलोभादिना
नुग्रहःकार्यः॥ ॥तथासतिपापंवक्तरिसंक्रमेत्॥ ॥दुर्बलेतुमष्टरिमथमंयथोक्तमुदाहृत्यतच्छक्त्यानुसारेणग्रीष्मा
दिकालहिमालयादिदेशानुसारेणचानुग्रहःकार्यएव॥ एवंशिशुवृद्धस्त्रीरोगिणामप्यनुग्रहः॥ सोपियद्धर्णस्ययत्पापेयत्प्रा
यश्चित्तमुक्तंतत्पादन्यूनंतदर्द्धंतत्पादंवेतिबलदेशकालाद्यनुसारेणनततोन्यूनं॥ तच्चबालवृद्धातुरस्त्रीणामर्धम्॥ एकद्वि
त्रिधर्मत्वेपादमेव॥ एवंचयत्रपादमेवप्रायश्चित्तमुपदिष्टंतत्रापिनानुग्रहः॥ ॥षोडशवर्षन्यूनोबालः॥ अशीतिवर्षाधि
कोवृद्धः॥ पूर्णषोडशवर्षस्यपूर्णप्रायश्चित्तम्॥ ऊनैकादशवर्षस्यपंचवर्षादूर्ध्वंपादप्रायश्चित्तम्॥ द्वादशादाषोडशमर्धम्॥
तदपितत्पित्रादिभिःकार्यम्॥ एवमतिरोग्यतिवृद्धयोरपिपुत्रादिभिः॥ पंचवर्षन्यूनस्यनपापम्॥ शास्त्रोपदिष्टंपूर्णप्रायश्चि
त्तंविप्रस्यैव॥ क्षत्रियविट्शूद्राणांतुपादपादहानिः॥ क्वचिद्विशेषस्तुवाचनिकः॥ तत्रजपहोमादिरहितमेवशूद्रस्य अम-
त्रकप्राणायामश्च॥ यागाद्यनुष्ठानशीलानांजपादिकम्॥ इतरेषांनपआदि॥ नामधारकमूर्खनिर्धनानांतपः॥ अनधी-

तानांच ॥ षोडशवर्षाधिकब्रह्मचारिणोद्विगुणंवानप्रस्थस्यत्रिगुणम् ॥ यतेश्चतुर्गुणं ॥ स्वयमशक्तौप्रतिनिधिद्वाराप्राय
श्चित्तंकार्यं ॥ अज्ञानाकामकृतेयदुक्तंकामकृतेनद्विगुणंकामतोभ्यासेचतुर्गुणम् ॥ कामादिकृतेयदुक्तं ॥ अकामादिकृते-
तदर्धंयोज्यम् ॥ कृतप्रायश्चित्तोगवांस्वयंतृणंदद्यात् ॥ तच्चताः निःशंकंस्वयमेव भक्षयेयुः तदैनमंगीकुर्युः सर्वेदंपापंनपु
नः करिष्यामीतिप्रतिजानीयात् ॥ नोचेत्पुनःप्रायश्चित्तेयोज्यः ॥ तत्रपापानिप्रकीर्णकजातिभ्रंशकरसंकरीकरणापात्रीकर
णंमलिनीकरणोपपातकमहापानकानुपानकरूपाणिविहितकरणेंद्रियानिग्रहेभ्योभवंति ॥ तत्रजातिभ्रंशकरादिगणिता
तिरिक्तंप्रकीर्णकम् ॥ जातिभ्रंशकराणितु ॥ विप्रपीडाकरणंअनाघ्रेयमद्यलशुनादिघ्राणंमित्रकौटिल्यंपुंसिमैथुनमेतानि-
जातिभ्रंशकराणि ॥ संकरीकरणानितु ॥ खराश्वोष्ट्रमृगहस्त्यजाविमीनमहिषाणामन्येषांच ग्राम्यारण्यपशूनांवधः संकरी
करणानि ॥ आपात्रीकरणानितु ॥ निंदितेभ्योधनादानंवाणिज्यंशूद्रसेवाकुसीदजीवनंअसत्यभाषणमेतान्यपात्रीकरणा
नि ॥ मलिनीकरणानितु ॥ बहुकृमिकीटकयोर्जलस्थलजयोर्हत्यामद्यानुगतभोजनंबहुफलैधपुष्पस्तेयंअधैर्यमेतानिम
लिनीकरणानि ॥ उपपातकान्याह ॥ गोवधः १ व्रात्यता २ स्तेयं ३ ऋणानपक्रिया ४ अनाहिताग्निता ५ अपण्यविक्रयः ६
परिवेदनम् ७ भृतकाध्ययनाध्यापने ८ पारदार्यम् ९ पारिवित्त्यं १० वार्धुष्यं ११ लवणक्रिया १२ स्त्रीशूद्रविट्क्षत्रवधः १३
अशुष्कद्रुमच्छेदनं १४ निंदितार्थोपजीवनं १५ नास्तिक्यं १६ व्रतलोपः १७ सुतविक्रयः १८ धान्यकुप्यपशुस्तेयं १९ अ

याज्ययाजनं २० पितृमातृसुतत्यागः २१ तडागारामविक्रयः २२ कन्यादूषणम् २३ परिवेदकयाजनं २४ तस्य कन्याप्रदानं २५ गुरोरन्यत्रकौटिल्यं २६ आत्मार्थपाकार्थक्रिया २७ मद्यस्त्रीनिषेवणम् २८ व्रतलोपः २९ स्वाध्यायाग्निसुतानांत्यागः ३० बांधवत्यागः ३१ स्त्रियाहिंसयाचौषधेनचजीवनम् ३२ हिंसकयंत्रप्रवर्त्तनम् ३३ द्यूतादिव्यसनम् ३४ आत्मविक्रयः ३५ शूद्रप्रेष्यता ३६ हीनसख्यम् ३७ हीनयोनिनिषेवणं ३८ अनाश्रमित्वं ३९ परान्नपुष्टता ४० असच्छास्त्राभिगमनं ४१ आकराधिकारः ४२ भार्यादिविक्रयः ४३ असत्प्रतिग्रहः ४४ निंदितान्नादनम् ४५ नयादिकर्मकरणं ४६ भार्यात्यागः ४७॥ ॥एतान्युपपातकानि॥ ॥महापातकानितु॥ ॥ब्रह्महत्यासुरापानंविप्रस्वर्णस्तेयं गुरुतल्पगमनं अष्टमेतच्चतुष्टयान्यतमसंसर्गइतिमहापातकानि॥ शूद्रस्यमद्यपानस्थाने ब्राह्मणीगमनं॥ महापातकसदृशान्युपपातकानितु॥ वृत्तयागस्थनृपवैश्यवधः १ शरणागतवधः २ रजस्वलागर्भिण्यत्रिगोत्रस्त्रीणांवधः ३ अविज्ञातगर्भस्यसुहृदश्च ४ गुरुविषयेमिथ्याभिशंसनक्रोधोत्पादनमधिक्षेपो॰ सकृत्प्रत्याख्यातकनिर्बंधश्च ५ राजगामिपैशून्यम् ६ गुरोर्महाद्वेषः ७ नास्तिक्याद्वेदनिंदा ८ कुशास्त्राध्ययनेनवितंडवादेनचाधीतवेदानांनाशनं ९॥ ॥एतानिब्रह्मवधसमानानि॥ ॥सुरापानसमानितु॥ लशुनविड्वराहच्छत्राकग्रामकुक्कुटपलांडुगृंजनानांमत्यात्यंताभ्यासेनभक्षणम् १ विप्रव्यतिरिक्तमित्रवधः २ गुरुविषयेमिथ्याभिशंसनेनान्यथावादित्वमन्यथाकर्तृत्वंकौटिल्यंवाङ्मनः कर्मणामनार्जवरूपंकौटिल्यंच ३ आत्मोत्कर्षार्थयजकु

ल्लादावनृतभाषणम् ४ रजस्वलामुखचुंबनं कूटसाक्ष्यं वेदत्यागवेदनिंदाकर्त्रौरन्नभुक्तिरितिसुरापानसमानानि ॥ स्वर्णस्ते
यसमानितु ॥ विप्रसंबंध्यश्वरत्नमनुष्यस्त्रीधेनुहरणंनिक्षेपहरणम् ॥ चार्वाकस्रुवर्णमानादिनिस्वर्णस्तेयसमम् ॥ गुरुतल्प
समानितु ॥ दुहितृस्नुषाभगिनीषुभागिनेयीषुसगोत्रदुहितृभगिनीषुसखीमास्वाचार्यपत्नीतत्तनयाश्वश्रुश्वपितृव्यभ्रातृ
मातुलमातामहश्रोत्रियऋत्विगुपाध्यायमित्रशिष्यस्त्रियस्तत्कन्याश्चउदक्यांनिक्षिप्तांप्रव्रजितांव्रतस्थांउत्तमब्राह्मणींस
गोत्रांशरणागतांराजसखींराजपत्नींसापत्नभगिनींस्तनधात्रींसखींचगच्छन्पौत्रींदौहित्रींपतिव्रतांपितृसखीं ॥ मातृभगि-
न्योः सखींपितृमातृष्वसारंकुमारींअंत्यजांम्लेच्छांपुल्कसींचगच्छन्गुरुतल्पगसमः ॥ अनुपातकानितु ॥ तथामातृपितृयो
निसंबंधास्रुगामीस्तेननास्तिकनिंदितकर्माभ्यास्यनिंदितकर्मत्यागीपतितात्याग्यपतितत्यागिनः पतिताःपातकसंयोज्य
काश्चेति इत्यनुपातकानि ॥ अतिपातकानितु ॥ मातृगमनंसापत्नमातृगमनंस्वसृस्नुषयोर्गमनमित्यतिपातकानीतिगौडनि
बंधेषु ॥ पापिनःपंचधा ॥ साक्षात्कर्त्रनुग्राहकप्रयोजकानुमंतृनिमित्तकर्तृभेदात् ॥ साक्षात्कर्तुः ॥ पालनादिनोपकारकोनुग्रा
हकः ॥२॥ आज्ञापयिताभ्यर्थयितोपदेष्टाचप्रयोजकः ॥३॥ स्वार्थपरार्थवानुमतिकर्तानुमंता ४ अनिमित्तंभर्त्सनताडनध
नहरणादिनाकोपंजनयन् तन्मरणेनिमित्तंभवेत्सनिमित्तकर्त्ता ५ एषूत्तरोत्तरमल्पदोषत्वंप्रायश्चित्तात्पत्वंच बोध्यम् पापि
नांप्रायश्चित्ताकरणेऽन्यजन्मनिदेहप्राप्तिः ॥ पापिनांप्रायश्चित्तोन्मुखत्वायजन्मांतरभाविनः कर्मविपाकाः कतिचिदुच्यंते अ

ज्ञानतोब्रह्महाश्वसूकरोष्ट्राणांक्रमेणयोनिमेति ॥ सुरापःखरपुल्कसवेनानां ॥ स्वर्णस्तेयीविड्जातकृमिकीटपतंगत्वंक्रमेण
याति ॥ गुरुतल्पगस्तृणगुल्मलतात्वंक्रमाद्याति ॥ ज्ञानतोब्रह्महाश्वसूकरोष्ट्रखरगोजाविमृगपक्षिचांडालपुल्कसानांयोनि
मेति ॥ सुरापोविट्कृमिकीटपतंगपक्षिहिंस्रत्ववताम् ॥ स्वर्णस्तेयीऊर्णनाभकृकलासतिरश्चांपशुपक्ष्यादीनांचद्यौचारिणांच
हिंस्राणांपिशाचानांसहस्रशोयोनिंयातिगुरुतल्पगः तृणगुल्मलतानांक्रव्यादानांक्रूरकर्मणांच ॥ तत्संयोगीचतद्वत् ॥ पर
स्त्रीहारीद्रव्यहारीचनिर्जलारण्येब्रह्मराक्षसः ॥ अनध्यायाध्यायीदुष्प्रतिग्राहीचसृगालः ॥ अन्नरत्नयोः हर्ताअजीर्णव्या
धिरतिदरिद्रोवा ॥ वेदवाकवेदपुस्तकानांचोरोमूकः ॥ पत्रशाकयोर्मयूरः हेमरत्नानांहेमकारीपक्षीअतिदरिद्रोवा ॥ न्यासस्य
अनपत्योधनहीनश्च ॥ स्रुगंधानांछुच्छुंदरी ॥ धान्यानांमूषकः तिलानांतैलस्यचतैलपायीकीटः ॥ परस्वत्वन्नानातिर्यक्
अहुतंहविरश्नन्हरन्वाश्वाअतिदुःखीवा ॥ यानंहरन्उष्ट्रः फलंकपी ॥ जलंजलप्लवः पक्षीमत्स्योवा ॥ क्षीरंकाकोबलाकोवा
॥ गृहोपस्करंगृहकारीकीटः ॥ मधुहरंदंशकःकीटः ॥ मासंगृध्रः ॥ गांगोधासर्पोवा ॥ अग्निंबकः ॥ वस्त्रंकुष्टीपतंगोवा ॥ रसं-
श्वा ॥ लवणंचीरीउच्चैः स्वरःकीटः तैजसंमंडलीगोब्राह्मणदेवस्वंपांडुरोगी ॥ न्यासंकाणोऽनपत्योवा ॥ शय्यांक्षपणकः
शंरवंशुक्तिंवाकपाली ॥ दीपंकौशिकः ॥ स्नेहंक्षयी ॥ पशुंपरप्रेष्यः ॥ यद्हरतितत्तत्प्रकारकःप्राणीतद्विकलोवाभवतिब्राह्म
णीगामीनिर्बीजी ॥ मातरंरुक्षपांवागच्छन्वातवृषणः ॥ चांडालींपुल्कसींवाजगरः प्रव्रजितांमरुपिशाचः शूद्रींदीर्घकीटः ॥

सवर्णादरिद्रः॥ राजस्त्रियंनपुंसकः॥ गांगच्छन्मंडूकः॥ पिशुनोदुर्गंधनासिकः सूचकोदुर्गंधास्यः देवब्राह्मणक्रोशकः खलतिः ॥ गरदाग्निदौउन्मत्तौ॥ गुरुंप्रतिहंतापस्मारीगोघ्नश्चांधः धर्मपत्नींत्यक्त्वाऽन्यत्रप्रवृत्तःशब्दवेधीप्राणी॥ कुंडाशीभगभक्षकः स्त्रीपण्यजीवीषंढः॥ कौमारदारत्यागीदुर्भगः मिष्टैकादशीवामनरोवातगुल्मीवा अभक्ष्यभक्षकोगंडमाली॥ क्रूरकर्मागृहस्थमित्रध्रुक्क्षयी॥ मातापित्रोरनृतवाक्स्वलज्जीः॥ कूटसाक्षीउच्छिन्नजंघाचरणः॥ विवाहविघ्नकर्ताछिन्नोष्ठः॥ विप्राव गोरणेछिन्नहस्तः॥ चतुष्पथेविण्मूत्रोत्सर्गेमूत्रकृच्छ्री॥ कन्यादूषकःषंढः॥ ईर्ष्यालुर्मशकः॥ पित्रादिविवदमानोऽपस्मारी॥ विद्याविक्रयीपुरुषोमृगः॥ वेदविक्रयीद्वीपी॥ बहुयाजकोजलप्लवः॥ अयाज्ययाजकोवराहः॥ अनिमंत्रितभोजीवायसः इतस्ततोभ्रमन्मार्जारः॥ कक्षवनदाहीखद्योतः॥ दारकाचार्योमुखदुर्गंधिः॥ पर्युषिताशीकृमिः॥ अदत्तादायीबलीवर्दः मत्सरीभ्रमरः॥ अग्न्युत्सादीमंडलकुष्ठी॥ शूद्राचार्यःश्वपाकः॥ वार्धुषिकोंगहीनः॥ अपण्यविक्रयीगृध्रः राजक्रोशकोगर्दभः मत्स्यवेधीगर्भवासी॥ आचार्यभार्यागामीभगंदरी॥ भृतकाध्यापकोशिरोगी॥ तीर्थेमूत्राद्युत्सर्गकरश्चैवत्वन्यत्रापिकुष्ठरः॥ स्त्रीणामप्येतद्दोषेषुतत्तज्जातीयस्त्रीत्वम् अथकृच्छ्रादिनिर्णयः अथवक्ष्यमाणामायश्चित्तप्रवरूपकृच्छ्रादिनिर्णयः॥ दिनंविलंघ्यरात्रौसार्धयामाभ्यंतरेमितभोजनेननक्तव्रतं॥ तदशक्तौगुंजाद्वयपरिमितरूप्यमाषकदानम्॥ तदभावेतन्मूल्यम्॥ दिवारात्रमभोजनमुपवासः॥ तदशक्तौरूप्यमाषत्रयदानम् एकविप्रभोजनंवा सहस्रगायत्रीजपोवा॥

द्वादशप्रमाणायासोवा ॥ प्रायश्चित्तेसंकल्पः ॥ ॥ अद्येत्यादिअमुकगोत्रोऽमुकशर्माऽमुककर्मजन्यपापक्षयकामोनक्तव्रतंक
रिष्ये ॥ तदशक्तौप्रतिनिधिरूपंइमंरौप्यमाषकंचंद्रदैवत्यममुकनामगोत्रायविप्रायाहंसंप्रददइति इदंमूल्यंविष्णुदैवत्यमितिवा
संकल्प्यदानंविप्रंचसंपूज्यद्रव्यमालभ्यसंप्रोक्ष्यदद्यात् ॥ प्राजापत्यंतु ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ॥ त्र्यहंप
रंचनाश्नीयात्प्राजापत्यःसउच्यते ॥ सायंद्वाविंशतिर्ग्रासः प्रातः षड्विंशतिस्तथा ॥ अयाचितेचतुर्विंशतिः सायंद्वादशप्रातःपं
चदशेतिवा ॥ ग्रासस्तु ॥ कुक्कुटांडप्रमाणोयावान्वामुखंप्रविशेत् अत्रशक्त्याव्यवस्था ॥ उपवासस्तुफलादिद्वारावाकार्यः ॥
अष्टैतान्यव्रतघ्नानि आपोमूलंफलंपयः ॥ हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधमित्युक्तेः ॥ परंतुपरिमितमेवेतिगौडाः ॥ इ
दमपिनेत्यपरे ॥ यद्वाक्रमणैकभक्तनक्तायाचितोपवासाः एवंत्रिरावृत्तिः इदंषडुपवासमितं ॥ तदशक्तौपयस्विन्याधेनोर्दानं ॥
तदभावेगोमूल्यं ॥ गोमूल्यंतु ॥ गवामभावेनिष्कंस्यात्तदर्धंपादमेववेति ॥ निष्कंतु ॥ सुवर्णचतुष्टयसमतोलितंरूप्यंनिष्क
म् ॥ रूप्यपरिमाणेनिष्कंसुवर्णाश्चत्वारइतियाज्ञवल्क्यात् ॥ धेनुः पंचभिराढ्यानांमध्यानांत्रिपुराणिका ॥ कार्षापणैकमू-
ल्यापिदरिद्राणांप्रकीर्तितेतिषट्त्रिंशन्मते ॥ पंचभिः पुराणैरितिशेषः पुराणश्च ॥ षोडशमाषपरिछिन्नंरजतम् ॥ कृष्णलस्तु
॥ रक्तिकाख्यगुंजापरिमितःकृष्णलः ॥ माषकंतु ॥ तद्द्वयपरिमितंरूप्यंरूप्यमाषकं ॥ यद्वापणषोडशकंपुराणः पुराणएवकार्षा
पणशब्देनकार्षिकशब्देनचोच्यते ॥ पणस्तु ॥ अशीतिरक्तिकापरिमितंताम्रंअशितिर्वराटिकावा ॥ ताम्रपणएवकर्षउच्यते

त्रैप्य:पुराणांदक्षिणस्यांपर्णैः पूर्वस्यामितिव्यवस्था ॥ वृषेषट्कार्षापणादेयाः॥पंचेतिशूलपाणिः॥ केवलगोमूल्यंतुपुराणत्रयमु
त्तमःपक्षः॥ द्वात्रिंशत्पणामध्यमः॥एकपुराणोऽधमइतिगौडाः॥ दशकार्षापणाधेनोरश्वेपंचदशैवतु ॥ द्वात्रिंशत्पणिकागावोऽस्याष्ट
वानतुहीनता॥ इतितुप्रायश्चित्तातिरिक्तदक्षिणाप्रसंगेधनवतोबोद्धव्यम् ॥ प्रसंगात्स्वर्णमानव्यवस्थाप्युच्यते॥ गुंजापरिमित
कृष्णलपंचकंस्वर्णमाषः॥षोडशमाषाअक्षरशब्देनसुवर्णशब्देनकर्षशब्देनाबस्तशब्देनचोच्यंते ॥ सुवर्णाश्चत्वारःपलंनिष्क
श्च॥दशपलानिधरणमितिमनुस्मृतौ॥ साष्टेशतेसुवर्णानांहेम्न्युरोभूषणेपले॥ दीनारेपिचनिष्कोस्त्रीत्यमरः॥ राजतःपुरा-
णोधरणइत्युच्यते॥ दशभिर्धरणैःराजतंशतमानमित्युच्यते॥तदेवराजतंपलमप्युच्यतइति॥ पलशतंतुला॥ तुलाविंशतिकं
भारः॥ आचितोदशभारः॥सएवशाकटइत्युच्यते॥ धेनुमूल्यसममूल्यंभूधनधान्यवस्त्रस्वर्णरूप्यादिवादद्यात्॥गायत्र्य
युतजपोवाकृच्छ्रस्थानेप्रत्याम्नायः॥ गायत्र्याद्वादशाधिकसहस्रसंख्याकः॥ समिद्धुतहविर्धान्यानामन्यतमस्यहोमोवा॥
तिलहोमस्तुसहस्रएवेतिकेचित्॥ घृताहुतिशतद्वयंवा॥ वेदसंहितापारायणंवा॥प्राणायामशतद्वयंवा॥ द्वादशविप्रभोज
नंवा॥ एकोपवासपूर्वकंद्वादशतिलपात्रदानंवा॥ तीर्थोद्देशेनयोजनगमनंवा॥ रुद्रैकादशिनीवा॥शिरःशोषणपूर्वकंद्वाद
शसांगस्नानानिवाप्राजापत्यमेवकृच्छ्रः॥ पादोनकृच्छ्रंतु॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम्॥ त्र्यहस्तुपवासइति॥
अत्रचतुःपणाधिककार्षापणद्वयमशक्तौदेयम्॥एकभक्तायाचितोपवासपादैरेतदितिस्मृत्यर्थसारे॥ कृच्छ्रार्धंतु॥सायंप्रा

तस्तथैवैकं दिनद्वयमयाचितम् ॥ ऽहस्रुपवासः ॥ अयाचितोपवासपादाभ्यामितिस्मृत्यर्थसारे ॥ इदंसार्द्धकार्षापणसममिति
गौडाः ॥ पादकृच्छ्रंतु ॥ एकैकदिनक्रमेणदिनचतुष्टयं ॥ इदंद्वादशपणसमम् इदमेवशिशुकृच्छ्रंविप्रादिवर्णक्रमेणोपवासत्र
यायाचितत्र्यनक्तत्रयैकभक्तत्रयरूपः पादकृच्छ्रइत्यापस्तंबः ॥ अयमेवातिकृच्छ्रःस्यात्पाणिपूरान्नभोजनैः ॥ अत्रयेषुन-
क्तादिदिनेषुभोजनंतेषुपाणिपूरान्नता ॥ नवाहमेकैकग्रासोंत्यत्रिदिनमुपवासोतिकृच्छ्रइतिमनुः ॥ अत्रप्राजापत्यत्रयमिति
चतुर्विंशतिमते ॥ कृच्छ्रातिकृच्छ्रःपयसादिवसानेकविंशतिः ॥ पयोत्रजलं ॥ तच्चसायंप्रातर्मध्यान्हेषुपेयम् ॥ द्विगुणोतिकृ
च्छ्रएवकृच्छ्रातिकृच्छ्रइतियमः तेनायंषट्प्राजापत्यसमः ॥ तप्तकृच्छ्रंतु ॥ तप्तकृच्छ्रं चरन्विप्रोजलक्षीरघृतानिलान् प्र
त्यहंपिबेदुष्णान् सकृत्स्नायीसमाहितः उष्णोदकान्निर्गतस्यबाष्पस्यपानमुष्णानिलपानम् ॥ एतच्चगात्रपूरणमात्रपर्यंतं
॥ उष्णादंगाद्वारा ॥ तत्रषट्पलमंबु ॥ त्रिपलंक्षीरम् ॥ एकपलंघृतम् ॥ एषएवशीतैः शीतकृच्छ्रः अत्रधेनुत्रयमितिषट्त्रिंशन्म
ते ॥ अतिकृच्छ्रतप्तकृच्छ्रयोर्धेनुद्वयमित्यपरार्कभवदेवौ ॥ धेनुचतुष्टयमितिशूलपाणिः तप्तक्षीरघृतांबूनामेकैकंप्रत्यहंपिबे-
त् ॥ एकरात्रोपवासश्चतप्तकृच्छ्रमुदाहृतमिति अपरस्तप्तकृच्छ्रः अत्रैकाधेनुः ॥ पर्णकृच्छ्रंतु ॥ पर्णोदुंबरराजीवबिल्वपत्रकुशो
दकैः ॥ प्रत्येकंप्रत्यहंपीतैः पर्णकृच्छ्रउदाहृतः ॥ एषांपक्वोदकैरित्यर्थः ॥ पर्णःपलाशः राजीवंपद्मम् ॥ अयंपंचाहसाध्यः ॥ सा-
र्द्धोपवासद्वयतुल्यः त्रिरात्रोपवासांतेपलाशादिपंचकषायोदकपानेपरः पर्णकृच्छ्रः चतुर्दश्यामुपोष्यपरेद्युः पूर्णिमायांपंच

गव्यपानेन ब्रह्मकूर्चः॥ पंचगव्यप्रमाणंतु॥ तत्रगोमूत्रं कृष्णवर्णायाः॥ श्वेतायाश्चैवगोमयं॥ पयश्च ताम्रवर्णायारक्तायागृह्य
तेदधि॥ कपिलायाघृतंग्राह्यंसर्वंकापिलमेववा॥ मूत्रमेकपलंदद्यादंगुष्ठार्धंतुगोमयम्॥ क्षीरंसप्तपलंदद्यात्दधित्रिपलमु-
च्यते॥ घृतमेकपलंदद्यात्पलमेकंकुशोदकम्॥ एतच्चगायत्र्यागोमूत्रमित्यादिसमंत्रकंकार्यम्॥ पंचगव्यपानंच भोजनस्था
ने॥ अत्रार्धधेनुः॥ अत्र होमोप्यस्ति॥ पंचगव्यहोमश्चसप्तपत्रैरच्छिन्नाग्रैः कुशैरिरावती इदंविष्णुर्मानस्तोकेवंशतीइतित्र्यृ
ग्भिः कार्यः॥ हुतशेषंप्रणवेनालोड्यप्रणवेनगृहीत्वामध्यमपलाशपत्रेणस्वर्णपात्रेणताम्रपात्रेणवाब्रह्मतीर्थेनपिबेत्॥ ए
षद्विरात्रः सांतपनकृच्छ्र इतिस्मृत्यर्थसारे॥ पराकस्तुद्वादशरात्रोपवासः॥ अत्रपंचधेनवइतिशूलपाणिः द्वइत्यपरार्कमवदे
वौ॥ तिस्रइतिषट्त्रिंशन्मतम्॥ सौम्यकृच्छ्रस्तु॥ पिण्याकाचामतक्रांबुसक्तूनांप्रतिवासरं॥ एकरात्रोपवासश्चसौम्य
कृच्छ्रोयमुच्यते॥ पिण्याकंतिलपिंडः॥ आचामओदनस्रावः॥ तक्रंजलंसक्तवश्चक्रमेणपंचदिनेषुषष्ठेहन्युपवासः॥ अत्रैकाधेनुरि
तिकेचित्॥ अर्धोचिता॥ पिण्याकंसक्तवस्तक्रंचतुर्थेहन्यभोजनम्॥ वासोवैदक्षिणांदद्यादित्यपरः सौम्यः कृच्छ्रः अत्रोभयत्रप्राण
यात्रामात्रनिर्वाहक्षमंपिण्याकादिग्राह्यम्॥ पिण्याकादीनांपंचानांप्रत्येकंत्रिरात्रोपयोगाभ्यासेपंचदशदिनस्तुलापुरुषः॥ पि
ण्याकादिपंचानांएकैकदिनोपयोगोत्तरंत्रिरात्रमुपवासेऽष्टदिनसाध्यस्तुलापुरुषः॥ एषांपंचानामेकैकस्यत्र्यहभोजनेत्र्यहंद्वयंवा
युभक्षणेचैकविंशतिरात्रसाध्यःसः॥ वारणकृच्छ्रस्तु॥ मासंपरिमितसक्तूदकपानेवारणकृच्छ्रः श्रीकृच्छ्रस्तुत्र्यहंपिबेत्तुगोमू

पंत्र्यहं वै गोमयं पिबेत् ॥ त्र्यहं यावकमेषः श्रीकृच्छ्रः ॥ यावककृच्छ्रः ॥ यवानामप्सु साधितानां सप्तरात्रं पक्षं मासं वा प्राशने यावककृच्छ्रः ॥ जलकृच्छ्रस्तु ॥ अनशनो जलस्थो होरात्रं क्षिपेदेष जलकृच्छ्रः ॥ उदकसक्तूनां मासाभ्यवहारेणापरः ॥ बिल्वैर्वा फलकैर्वापि पद्माक्षैरथवा शुभैः ॥ मासाशनेन श्रीकृच्छ्रः कथ्यते च द्विजोत्तमैः ॥ वज्रकृच्छ्रस्तु ॥ गोमूत्रयावकपाने एकत्रे वज्राख्यः कृच्छ्रः ॥

॥ इति कृच्छ्रनिर्णयः ॥ ॥ अथ सांतपनानि ॥ ॥ पूर्वेद्युः पंचगव्यमात्राशनं परेद्युरुपवास इति द्विरात्रिकं सांतपनं ॥ एतदशक्तावेकः पुराणः ॥ यतिसांतपनं तु ॥ पंचगव्यं त्र्यहाभ्यस्तं यतिसांतपनं स्मृतम् ॥ अत्र चतुर्थ उपवासः ॥ अत्रापि होमः ॥ पंचगव्योपवासाः पंच षष्ठ उपवास इति षडहः सांतपनं ॥ महासांतपनस्तु ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकानि क्रमेणैकैकमत्यहं पीत्वा एकरात्रोपवासे सप्ताहसाध्यो महासांतपनः ॥ अत्र धेनुद्वयं ॥ इतरेषु प्रागुक्तसांतपनेषु सार्द्धगौरिति षट्त्रिंशन्मते ॥ प्रथम उपवासस्ततः ॥ क्रमेण तेषां षण्णां पानमिति प्रांचः ॥ गोमूत्रगोमयक्षीरदधिसर्पिषां क्रमेणैकैकस्य त्र्यहं त्र्यहमुपयोगे पंचदशाह्निकं नतत् ॥ षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् ॥ त्र्यहं चोपवसेदंत्यमित्येकविंशतिरात्रसाध्यमेतत् ॥ एतान्येव तु पेयानि एकैकं तु द्व्यहं द्व्यहं ॥ अतिसांतपनं त्वेनत् ॥ इति द्वादशरात्रसाध्यम् ॥ इति सांतपनानि ॥ ॥ अथ चांद्रायणानि ॥ ॥ पिपीलिकामध्यचांद्रायणं तु ॥ एकैकं ह्रासयेत्पिंडं कृष्णे शुक्ले च वर्धयेत् ॥ उपस्पृशंस्त्रिषवणमेतच्चांद्रायणं स्मृतम् ॥ कृष्णमतिपद्यस्यारंभः ॥ कृष्णप्रतिपदि चतुर्दश ग्रासान् ग्रसित्वा तत एकैकं ह्र सित्वा चतुर्दश्यामेकं ग्रसित्वाऽमायामुपोष्य पुनः शुक्लप्र

तिपदमारभ्यपूर्णिमांतंयावद्वर्धयेत् ॥ ग्रासश्चमयूरांडप्रमाणः॥ आर्द्रामलकप्रमाणोवा॥ ॥ इतिपिपीलिकामध्यम्॥ ॥यव
मध्यचांद्रायणंतु एवमेवविधिंकृत्स्नमाचरेद्यवमध्यके॥ कृष्णपक्षादिनियतंचरेच्चांद्रायणव्रतम्॥ अत्रशुक्लप्रतिपदादिग्रासवृद्धिः॥ पू
र्णिमांतंततोह्रासोमांतः॥ अनयोरष्टधेनवः॥ वृषभसहिताचात्रगौर्दक्षिणा॥ सार्द्धसप्तधेनवइतिशूलपाणिः॥ इदमतिधनिनः॥
निर्धनस्यतुप्राजापत्यत्रयमित्येके॥ अत्रैकादश्यादिव्रतलोपोनदोषावहः॥ यतिचांद्रायणंतु॥ अष्टावष्टौसमश्नीयात्पिंडान्मध्यंदि
नेस्थितः॥ नियतात्माहविष्याशीयतिचांद्रायणंस्मृतं॥ मासमितिशेषःएतत्प्राजापत्यचतुष्टयसममितिबृहद्विष्णुः॥ शिशुचांद्रा
यणंतु॥ चतुरःप्रातरश्नीयात्पिंडान्विप्रःसमाहितः॥ चतुरोस्तमितेसूर्येशिशुचांद्रायणंस्मृतम्॥ ऋषिचांद्रायणंतु॥ त्रींस्त्रीन्पिंडा
न्समश्नीयान्नियतात्मादृढव्रतः॥ हविष्यान्नस्यवैमासमृषिचांद्रायणंस्मृतम्॥ अनुपदोक्ताभ्यांकिंचिदधिकंद्विगुणमेतत्॥ अ
नुपदोक्तयोश्चतुष्टयधेनुदानमितिशूलपाणिः॥ यत्तुऋषिचांद्रायणेपितावदेवेत्युक्तम्॥ यच्चान्यैर्धेनुत्रयमित्युक्तंतत्रोपपत्तिश्चिंत्या
॥ ॥सोमायनव्रतंतु॥ ॥ गोक्षीरंसप्तरात्रंतुपिबेत्स्तनचतुष्टयात्॥ स्तनत्रयात्सप्तरात्रंसप्तरात्रंस्तनद्वयात्॥ स्तनात्तथैवष
ड्रात्रंत्रिरात्रंवायुभुग्भवेत्॥ एतत्सोमायनंनामव्रतंकल्मषनाशनम्॥ प्रतिदिनसंख्यानियमानादरेणमासत्रयम्॥ चत्वारिंश
दधिकशतद्वयग्रासानांपंचविंशत्यधिकशतद्वयग्रासानांवाशनेपिचांद्रायणम्॥ आद्यद्वयातिरिक्तचांद्रायणानांदिनांतरेप्यारंभो
नप्रतिपद्येवेतिनियमः॥ ॥ इतिचांद्रायणानि॥ ॥ पंचगव्यपरिमाणंतु गोशकृद्द्विगुणंमूत्रंघृतंविद्याच्चतुर्गुणम्॥ क्षीरमष्ट

गुणंप्रोक्तंपंचगव्येनथादधीति॥ ॥तथाष्टगुणमितिमांचः॥ ॥गोमूत्रमाषकाण्यष्टौगोमयस्यतुषोडश॥क्षीरस्यद्वाद
शप्रोक्तादध्नःपंचदशेतिच॥ ॥मूत्रवत्घृतस्य॥ ॥कुशोदकसाहित्यंचात्रेत्यन्ये॥ ॥दधिनिदशमाषाः॥ ॥कुशोदकेन
दर्धनेतिस्मृत्यर्थसारे॥ ताम्रवर्णायागोमूत्रं॥ श्वेतायागोमयम्॥ पीतायाःक्षीरम्॥नीलायाःदधि॥कृष्णायाःसर्पिरिति च॥तत्त्वप्रण
वेनाहृत्यतेनैवालोड्यतेनैवादायतेनैवपिबेदित्युक्तम्॥ वक्ष्यमाणप्रायश्चित्तेषुसामान्यतोव्रतशब्दोगोमूत्रयावकाहारपरः॥दिन
रात्रिशब्दौनक्तद्वचनावेव॥ उपवासाभिव्याहारेत्वहोरात्रवचनौ॥अहःशब्दश्चाहोरात्रपरइतिक्वचिद्ग्रंथेव्यवस्थोक्ता॥ ॥मासो
पवासेपंचदशप्राजापत्यानि॥ तथाकृच्छ्राब्दत्रिंशद्देनुसमम्॥ गोमूत्रपाचितयावकस्यमासंपानेद्वादशप्राजापत्यानि॥पाकोत्त
रमीषद्गोमूत्रयुक्तपानेकृच्छ्रद्वयम्॥ त्रिंशन्नक्तैर्दशोपवासास्तत्रकृच्छ्रचतुष्टयम्॥ उपवासस्थानेएकोविप्रोभोज्यः॥शक्तेनद्वौ
सहस्रगायत्रीजपोवा॥द्वादशप्राणायामावा॥द्वादशवार्षिकादिषुद्वादशदिनैरेकैकप्राजापत्यकल्पना॥ अतएवचतुर्विंशतिम
ते॥ कृत्वार्वाक्ब्रह्महत्यायाःषडब्दंकृच्छ्रमाचरेत्॥ प्रत्याम्नायोगवांदेयःसाशीतिर्धेनिनांशतम्॥ तथाष्टादशलक्षाणांगायत्रीं-
वाजपेद्बुधइति॥गायत्र्यास्तुजपेत्कोटिंब्रह्महत्याव्यपोहतीति॥ द्वादशाब्दसमकक्षंनप्रत्याम्नायइतिबोध्यम्॥ त्रैमासिकेसार्द्धस
प्तप्राजापत्यानि॥मासिकेव्रतेसार्द्धप्राजापत्यद्वयम्॥ मासंपंचगव्यपानेप्येवं॥ षडुपवासेप्येकंप्राजापत्यम्॥मासंत्वयाव्रतसार्द्ध
प्राजापत्यद्वयम्॥ वृषभैकादशदशगोदानसहितत्रिरात्रोपवासात्मकगोवधव्रतेसार्द्धैकादशत्रैमासिकगोवधव्रतेसार्द्धसप्तेतिस्मृ-

स्यर्थसारे ॥ योगीश्वरोक्तमासिकव्रतेत्रीणितत्सममेकंचांद्रायणंचेतिमिताक्षरा ॥ यत्तुब्रह्मवधोक्तद्वादशवार्षिकेऽशीत्कनरशतधे
नवस्तावंतिप्राजापत्यानिवेतिप्रांचस्तत्प्रागुक्तचतुर्विंशतिमतविरुद्धमित्येके ॥ ॥अथकृच्छ्रस्थानेतीर्थप्रत्याम्नायाउच्यंते॥
भागीरथ्यांस्नानंषष्टियोजनागतस्यषडब्दकृच्छ्रसमम् ॥ अत्रयात्रायोजनवृद्धौयोजनस्यार्द्धकृच्छ्रःवृद्धिःएकयोजनागतस्यमध्ये
पर्वतादिव्यवधानेकृच्छ्रत्रयम् ॥ तृतीयांशाधिकक्रोशादागतस्यभागीरथ्यांविध्युक्तस्नानेएकःकृच्छ्रः॥ प्रयागेद्विगुणंगंगाद्वारेगं
गासागरसंगमेचैवं ॥ वाराणस्यामगणितं ॥ वाराणस्यांपातकंनप्रविशति॥सर्वत्रयात्राभाषाभेदवृत्तदेशांतरविषयेमहापर्वत
व्यवधानेमहाव्यवधानेचक्रमेणद्वादशाष्टचतुर्योजनन्यूनाषट्चतुर्द्वियोजनन्यूनावा॥विंशतियोजनागतस्ययमुनासरस्वत्योः
स्नानमब्दसमम् ॥अब्दद्वयसममित्यन्ये ॥ मथुराद्वारवत्योर्द्विगुणम् ॥ प्रभासेप्येवम् ॥ दृषद्वतीशतद्रुविपाशावितस्ताशराव
तीमरुद्वृधासिक्नीमधुमतीपयस्विन्यादिषुदेवनदीषुस्नानंत्रिंशद्योजनागतस्याब्दसमम्।पंचदशयोजनागतस्येत्यन्ये॥चंद्र
भागावेत्रवतीसरयूगोमतीदेविकाकौशिकीमंदाकिनीपुनःपुनापूर्णापुण्याबाहुदावारुणीगंडक्यादिदेवनदीषुद्वादशयोजनाग
तस्यषोडशकृच्छ्राणि एतासांपरस्परसंगमेद्विगुणंत्रिगुणमित्यन्ये अन्यासुसमुद्रगासुनदीषुद्वादशयोजनागतस्यषट्कृ-
च्छ्रसमंमहानदेषुनदधेशोणनदेगंगार्द्धसमंपुष्करेप्रयागसमंसन्निहत्यांनर्मदायांचतुर्विंशतियोजनागतस्यचतुर्विंशतिकृ
च्छ्रसमं ॥ कुब्जिकासंगमेद्विगुणं ॥ शङ्कुतीर्थेचतुर्गुणम् ॥ गोदावर्यांषष्टियोजनागतस्यत्र्यब्दसमं ॥ वंजराप्रणीतयोर्नर्मदा

वत् ॥ पूर्णायांयोजनार्द्धेकृच्छ्रः॥ कृष्णवेणीतुंगभद्रयोः प्रतियोजनंकृच्छ्रं ॥ पंपायांद्विगुणंहरिहरेत्रिगुणं ॥ कुल्याःस्नानेनत्रिरात्रो
पवासफलदाः॥ अल्पनद्यः कृच्छ्रफलदाः॥ नद्योद्विकृच्छ्रफलदाः॥ उक्तान्यसर्वतीर्थेषुरामक्षेत्रश्रीरंगादिक्षेत्रेषुयोजनसंख्यया
कृच्छ्रसंख्या ॥ एकयोजनादिषट्योजनगांताः स्रवंतःकुल्याः॥ द्वादशयोजनगाअल्पनद्यः चतुर्विंशतियोजनगानद्यः॥ नदधि
कगामहानद्यः समुद्रगाश्च ॥ उपवाससहितंनदीस्नानंकृच्छ्रसमंयोजनादर्वागपि ॥ शुनीगर्दभीचांडालीशूद्रीकष्टगानद्यःपापन
द्यश्चवर्ज्याः॥ सर्वत्रसमुद्रस्नानंदर्शेकार्यम् ॥ देवतासमीपेसरःसरिन्नदीसंगमेषुचसदाकार्यम् ॥ समुद्रस्नानेपंचदशयोजनाग
नस्यपंचदशकृच्छ्राणिइत्यादिस्मृत्यर्थसारेविस्तरः॥ परार्थगंनातीर्थषोडशांशंलभेते ॥ प्रसंगेनगंतार्द्धफलं ॥ अनुषंगेणतीर्थप्रा
प्यस्नानेस्नानफलमेवयात्राफलं ॥ पितामहभ्रातृमातामहपितृव्यमातुलश्वशुरपोषकार्थंगुर्वाचार्योपाध्यायार्थंतेषांपत्न्य
र्थंपितृष्वसृमातृष्वस्रर्थंचस्नात्वास्वयमष्टमांशंलभते ॥ पित्रोरर्थंकुर्वन्पुत्रश्चतुर्थांशं ॥ दंपतीचसपत्न्यश्चलभंतेऽर्द्धमियः
फलम् ॥ अर्थिनांचनफलह्रासः॥ कर्कादौमासद्वयेनिरंतरंरजस्वलानद्यः॥ तास्वपिगोमतीचंद्रभागासिंधुर्नर्मदाशरयूश्च
त्रिरात्रम् ॥ वापीकूपतडागादिषुस्थितपुराणोदकेषुत्रिरात्रम् ॥ सरस्वतीगंगायमुनादयोनकदापिरजस्वलाः॥ अथव्रतांग
भूताधर्मायमानियमाश्च ॥ ब्रह्मचर्यंदयाक्षांतिर्दानंसत्यमकौटिल्यमस्तेयमहिंसामाधुर्यंदमश्चेतिदशयमाः॥ स्नानंमौ
नोपवासेज्यास्वाध्यायोपस्थनिग्रहगुरुशुश्रूषाशौचाक्रोधाप्रमादनाइतिनियमादश॥ ॥ अथप्रायश्चित्तपूर्वाहकृत्य

म् ॥ केशनखादिवपनं कृत्वा स्नात्वा घृतं प्राश्य प्रदोषे गृहाद्बहिर्भूतकालसंख्योल्लेखपूर्वकं संकल्पः कार्यः वपनं च महापातकगोवधा
तिरिक्ते विद्वद्विप्रनृपयोः सधवस्त्रीणां नास्ति ॥ तत्र सधवानां सर्वान्केशान्समुद्धृत्य द्व्यंगुलछेदनमेव तत् ॥ तीर्थेष्वप्यासामेवमेव
॥ ॥ विधवानां सर्ववपनम् ॥ ॥ केशधारणेच्छायां द्विगुणितं कार्यम् ॥ तत्र दक्षिणापि द्विगुणा ॥ वपनं च दिनत्रयसाध्यव्रते न-
खरोमछेदनमात्रं ॥ षड्दिनसाध्ये श्मश्रुणोपि ॥ नवदिनसाध्ये शिखावर्ज्यम् ॥ तदूर्ध्वं सशिखं ॥ त्रिषड्दिनयोः स्त्रीणां नैवतत्
त् ॥ धेनुदानादावप्येवं विशेष ऊह्यः ॥ अस्य नैमित्तिकत्वात्सदाबद्धशिखत्वेनेत्यनेनाविरोधः ॥ ॥ प्रायश्चित्तेतिथयः ॥ ॥ प्रा
यश्चित्तं चाष्टमीचतुर्दश्योर्न कार्यम् ॥ चतुर्दश्यां संकल्प्यामायां कार्यमिति शिष्टाः ॥ तत्र पापं द्विविधम् ॥ रहस्यं प्रकाश्यं च ॥
कर्तृव्यतिरिक्तैरज्ञानदोषं रहस्यं ॥ तत्र रहस्ये प्रायश्चित्तम् ॥ प्रकीर्णकादिषु पंचविंशतिः प्राणायामाः ॥ उपपातके शतं ॥ अ
नुपातके द्विशतम् ॥ अतिपातके त्रिशतम् ॥ महापातके चतुःशतम् ॥ सर्वत्राभ्यासे द्विगुणम् ॥ मत्या त्रिगुणम् ॥ मत्याभ्यासे
चतुर्गुणम् ॥ यद्वा गायत्र्या लक्षजपो महापापे ॥ पादोनलक्षजपोऽतिपातके ॥ अर्धलक्षमनुपातके ॥ पादलक्षमुपपातके ॥
तदर्धार्धं प्रकीर्णकादिषु ॥ अत्राप्यभ्यासादौ द्वैगुण्यादि योज्यम् ॥ अन्यान्यपि महापातकादिषु रहस्यप्रायश्चित्तानि विस्तरे
णनिबंधेभ्यो ग्राह्याणि ॥ अविद्वान्गुरुखांतरेण व्याजात् प्रायश्चित्तं ज्ञात्वा रहसि चरेत् ॥ विद्वांस्तु स्वयमेव ज्ञात्वाचरेत् ॥ दश
लक्षगायत्रीजपः सर्वपापप्रायश्चित्तं ॥ सर्वेषामेव पापानां संकरे समुपस्थिते ॥ शतं सहस्रशोभ्यस्ता गायत्री पावनं महदिति

१

3765

स्मरणात् ॥ भस्माछन्नोभस्मशयानोरुद्रजापीसर्वपापान्मुच्यते ॥ सचैकादशवारं ॥ सर्वशब्देनमहापातकानिरिक्तंग्राह्यमि
तिकेचित् ॥ महापापान्यपीत्यपरे ॥ पुरुषसूक्तंप्रत्यहंषोडशकृत्वोजपन्मासेनगुरुतल्पादेरपिशुद्ध्येत् ॥ एवंपवमानजपाघम
र्षणसूक्तजपादयोऽन्यतोज्ञेयाः ॥ अत्राहारविशेषानुक्तौपयःप्रभृतयः शिलोञ्छयादयोमाषादयश्च देशकालौ ॥ अतिरिक्तेषु
व्याहृतिभिराचमनं ॥ एवंख्यापनानुतापाध्ययनान्यपिपापनाशकानि ॥ ख्यापनंसभासुपुण्यस्थानेषुचस्वपापकथनपूर्वकं
मात्मनिंदनं ॥ अध्ययनंवेदवेदांतादेश्च ॥ उपदिष्टप्रायश्चित्तेष्वेतदंगं ॥ नस्वतंत्रं ॥ अन्यथानद्विधिरफलः स्यात् कृतेपापेऽनुता
पोवैयस्यपुंसःप्रजायते ॥ प्रायश्चित्तंतु तस्यैकं हरिसंस्मरणंपरम् ॥ प्रातर्निशितथासंध्यामध्यान्हादिषुसंस्मरन् ॥ नारायण
मवाप्नोति सद्यःपापक्षयेनरइतिविष्णुपुराणे ॥ अत्रकेचित्अनेनसर्वविधसर्वपापप्रणाशोभवत्येव ॥ इहव्यवहार्यतातु
अतिप्रसंगनिवारणायमन्वादिप्रायश्चित्तैरेव ॥ रागद्वेषादिकलुषितहृदयतयातत्राविश्वासवतोजनान्प्रतिसंव्यवहार्यता
सिद्ध्येवातदुपदेशइतिप्राहुः गंगास्नानंचसर्वविधसर्वपापप्रणाशकम् ॥ चांद्रायणसहस्रंतुयश्चरेत् कायशोधनम् ॥ पिबे
द्यश्चापिगंगांभःसमौस्यातांनवासमौ ॥ भवंतिनिर्विषाःसर्पायथातार्क्ष्यस्यदर्शनात् ॥ गंगायादर्शनात्तद्वत्सर्वपापैःप्रमु
च्यते ॥ इत्यादिमहाभारतादिवचनेभ्यः नचैतान्यर्थवादाः ॥ स्नानमात्रेणगंगायांपापंब्रह्मवधोद्भवं ॥ दुराधर्षकथंयाति
चिंतयेद्योवदेदपि ॥ तस्याहंप्रददेपापंब्रह्मकोटिवधोद्भवम् ॥ स्तुतिवादमिमंमत्वाकुंभीपाकेषुजायते ॥ आकल्पंनरकं

मुत्क्वाततोजायेतगर्दभइति ॥ भविष्यकौर्म्यादिभ्यः॥ पापानांपापहंत्रीत्वंस्वर्गमोक्षैकहेतुता ॥ स्वभावएवगंगायाः शैत्यं
शीतरुचेर्यथा॥ नगंगासदृशंतीर्थंनदेवःकेशवात्परः॥ ब्राह्मणेभ्यःपरंनास्तीत्येवमाहपितामहः॥ सर्वंकृतयुगेतीर्थंत्रेता
यांपुष्करंस्मृतम्॥ द्वापारेतुकुरुक्षेत्रंकलौगंगैवकेवलम् ॥ गंगाकलियुगेस्मृतेतिपाठांतरे॥ येनाकार्यशतंकृत्वाकृतंगंगे
वसेवनं॥ तत्सर्वंतस्यगंगांभोदहत्यग्निरिवेंधनमित्यादिवचनान्यनुसंधेयानि॥ कलियुगेइत्थंपापनाशसामर्थ्यंगंगायाए
व॥ नतुपुष्करादीनां॥ त्रेतादौतुपापस्याल्पत्वात्तन्नाशसामर्थ्यंतेषामपीतिसर्वंकृतयुगइत्यस्यतात्पर्यम्॥ ॥अथ
सर्वप्रायश्चित्तविधिः॥ ॥तत्रमहापातकाद्दर्वाचीनेषुबहुविधेष्वज्ञानकृतेषुप्रतिनिमित्तंकर्त्तुंअशक्तौसर्वप्रायश्चित्तं
षडब्दंअत्यंतगुणवतोविरक्तस्य॥ अभ्यासेद्विगुणम्॥ मत्यात्रिगुणम्॥ मत्याभ्यासेचतुर्गुणम्॥ अत्यंताभ्यासेनिरंत-
राभ्यासेवापंचगुणं॥ बहुकालाभ्यासेषड्गुणम्॥ उपपातकमारभ्यार्वाचीनेषुपापेष्वज्ञानकृतेषुप्रतिनिमित्तंकर्त्तुमश
क्तौत्र्यब्दंप्रायश्चित्तं॥ अभ्यासादौप्राग्वत्॥ प्रकीर्णकेषु तादृशेषुतादृशस्यएकाब्दं॥ अभ्यासादौप्राग्वत्॥ क्षुद्रपापेषु
तादृशेषुतादृशस्यकृच्छ्रातिकृच्छ्रचांद्रायणानि ॥ तत्स्थानेद्वादशकायानिवा॥ अभ्यासादौप्राग्वत् चतुष्टयमिदंचोत्त
मस्यमध्यमस्यद्विगुणं॥ अधमस्यत्रिगुणम् ॥ द्वादशाब्दंद्विगुणं॥ महापातकावधिसकलपापप्रायश्चित्तमिति॥ सर्व
त्रानुक्तनिष्कृतौकृच्छ्रचांद्रायणानिसमस्तव्यस्तरूपेणयोग्यतयायोज्यानि॥ क्षुद्रेषुपापेषुउपवासत्रिरात्रप्राजापत्यानि

योग्यतया ॥ अतिक्षुद्रेषु द्वादश षट्त्रिंशद्वा प्राणायामाः ॥ स्त्रीशूद्राणाममंत्रकास्ते ॥ पुरुषाकारहंतकाराग्नदानानि वा ॥ मौन
लोपेषु विष्णुस्मरणं अथ प्रकाशरूपेषू द्देशक्रमेण प्रकीर्णप्रायश्चित्तान्युच्यंते ॥ खरेणोष्ट्रेण वा युक्तं यानमारुह्याध्वगंतानग्न-
स्नापी नग्नतयान्नभोक्ता दिवास्वदारगामी च सचैलस्नानपूर्वकं प्राणायामेन शुद्ध्येत् ॥ अमत्यास्नानमात्रं ॥ अभ्यासे प्राणाया
मचतुष्टयं ॥ चतुरधिकाभ्यासे एकउपवासः ॥ अत्यंताभ्यासे त्रिरात्रं ॥ साक्षात्खरवरोष्ट्रारोहिणां द्विगुणं ॥ गुरुं त्वंकृत्य हीनपु
रुषं प्रयोज्य हुंकारपूर्वकं छलवादैर्विप्रं निर्जित्य वस्त्रेणापि वा विप्रस्य कंठबंधने तृणेनापि वा तस्य ताडने गुर्वादिकं शीघ्रं नत्वा
विगतकोपं कृत्वा नक्तं भुंजीत उपवसेदिति स्मृत्यर्थसारे ॥ अभ्यासे त्रिरात्रम् ॥ गुरुदेवविप्राचार्यमातापितृनरेंद्राणां प्रतिष्ठी
वने प्रतिवादे आक्रोशने तिक्रमे पैशून्ये च जिह्वां दहेद्धिरण्यं दद्यात् ॥ अभ्यासे सहस्रगायत्रीजपः ॥ अमत्या तु प्राजापत्यं कृत्वा
स्नात्वा गुरुप्रसादनात्पूतो भवति शूद्रस्य विप्रातिक्रमादौ सप्तरात्रमभोजनं ॥ क्षत्रियातिक्रमे एकउपवासः ॥ विप्रं हंतुं दंडोद्यम
ने कृच्छ्रः ॥ इदमेवावगुरणं ॥ दंडनिपातने तिकृच्छ्रः ॥ रक्तस्रवणे कृच्छ्रातिकृच्छ्रः ॥ अभ्यंतररक्ते त्वक्भेदे वा कृच्छ्रः ॥ अस्थि
भेदने तिकृच्छ्रः ॥ अंगकर्त्तने पराकः ॥ केचित्तु दंडोद्यमननिपातनरुधिरस्रावे तु अर्धकृच्छ्रकृच्छ्रातिकृच्छ्राणि ॥ अन्ये पादकृ
च्छ्रार्धकृच्छ्रकृच्छ्राण्याहुस्तेषां कामाकामभेदेन व्यवस्था ॥ अंगछेदने दशगोदानं ॥ कामतो द्विगुणम् ॥ अत्र यद्यपि शोणि-
तनिपातनयोः क्रमेण निपातनावगुरणे आवश्यके तथापि तन्निमित्ते प्रायश्चित्ते पृथक् प्रभवतः ॥ तयोरवश्यंभावित्वेन तदभ्यं

तरवर्त्तित्वात् ॥ यत्रपुनर्निर्मित्तानांनांतर्भावनियमस्तत्रपृथक्भवत्येव ॥ यथापर्वणिस्वभार्यांरजस्वलांतैलाभ्यक्तोदिवागच्छति
जर्केइति ॥ विप्रस्यपादप्रहारस्तुपोष्यस्नात्वाप्रणिपत्यप्रसादनं ॥ पादेनस्पर्शेतुप्रसादनमेव ॥ अप्स्वग्नौवाआर्त्तस्यविण्मूत्रो
त्सर्गस्सचैलस्नानपूर्वकगोस्पर्शः मत्यातूपोष्यसचैलंस्नायात् कामतोभ्यासउपवासत्रयंस्वदमापः प्रवहतेत्यस्यगायत्र्यावाज-
पश्च अताप दित्रिप्रवणस्नानंत्रिरघमर्षणजपवोध्यं अनार्तस्यअत्यंताभ्यासेवातप्तकृच्छ्रं ॥ उदकंविनामूत्राद्युत्सर्गेप्येवमेव स
र्वइदमुत्रपुरीषोत्सर्गोक्तधर्ममात्रोपलक्षणं ॥ निर्जलारण्यादौतु अपोहृत्वैपशौचसचैलस्नातंकुर्यात् ॥ मूत्रादिवेगधारणे-
अष्टोत्तरशतजपः श्रौतस्मार्तकर्मलोपेतूपवासः इदंचाप्युक्तप्रायश्चित्तविशेषश्रुतिस्मृत्युदितकर्मलोपेयातत्ताप्रतिपदोक्तप्रा
यश्चित्तसमुच्चयेनवाबोध्यम् सूर्योदयेस्वस्थोमत्यासुप्तोदिनेतिष्ठन् सावित्रींजपन्नुपवसेत् ॥ सूर्यास्तमयेसुप्तोरात्रौति
ष्ठन् सावित्रींजपन्नास्यात् जीर्णमलवद्वस्त्रधारणादिस्नातकव्रतलोपेतूपवासोष्टशतजपोवा पंचमहायज्ञेष्वन्यतमलोपे-
नातुरस्योपवासः धनिनः कृच्छ्रार्द्धं आहिताग्नेः पर्वण्युपस्थानलोपेचैवं ॥ स्नानंविनाभोजने एकउपवासोदिनंव्याप्यजपश्च
ऋतौभार्यागमनलोपेकृच्छ्रार्द्धं अकामतः प्राणायामशतं इदंचापर्वणिसन्निहितस्यारोगिणएव ॥ षोडश्यांरात्रौतुपर्वण्य-
पिगच्छेत् ॥ स्वभार्यांक्रोधादगम्येतिवदतांवर्णानांक्रमेणकृच्छ्रनवरात्रइतिषड्रात्रत्रिरात्राणिसर्वेषांप्राजापत्यमितिगौ
डाः त्यागानांतरंसंग्रहेछायांकृषिचांद्रायणंकृत्वासकार्यः एकपंक्त्युपविष्टानांस्नेहादिनाविषमदानेदापनेचप्राजापत्यम् ॥

नदीसंक्रमकर्तुश्च कन्याविघ्नकरस्यच ॥ समेविषमकर्तुश्च शक्त्यैचांद्रायणंस्मृतम् ॥ संक्रमणउदकावतरणमार्गः ॥ पूजादौमा
र्गदौच समेविषमकर्तृत्वम् अत्रचांद्रायणंभैक्षान्नेनेतिस्मृत्यर्थसारे ॥ पतितम्लेंच्छादिभाषणेपुण्यकृतांध्यानंविप्रेणसहभा
षणंवा भार्यान्नधनानांलाभस्यविघ्नकरणेप्रत्येकंसंवत्सरव्रतम् ॥ यज्ञोपवीतंविनाभोजनेंबुपानेचनक्तव्रतम् अंबुपानेत्रिःप्राणा
यामावा ॥ मत्याभोजनेतूपवासः ॥ उच्छिष्टस्यमत्याभोजनांबुपानयोरप्येवं ॥ यज्ञोपवीतंविनामत्यामूत्रादिकरणेभक्षणेचाष्ट
शतगायत्रीजपः अकामतः एषुक्रमेणत्रिषट्प्राणायामनक्तव्रतानि ॥ यद्युत्तिष्ठत्यनाचांतोभक्तवानासनात्ततः ॥ सद्यःस्ना
नंप्रकुर्वीत ॥ अंबुनिस्वप्रतिबिंबदर्शनेमयितेजइतिमंत्रंजपेत् ॥ अशुचिद्रव्यस्पर्शेवाक्पाणिपादचापल्यकरणेकामकृते
निःप्रयोजनेनानृतवादनेच गायत्रीजपः अकामकृतेत्वाचमनम् ॥ अत्यल्पेदक्षिणकर्णस्पर्शःजलाभावेवा शय्यारूढ १ पा
दुकोपानदारोपितपादो २ प्रयोच्छिष्टं ३ धकारस्था ४ शकृत् ५ जपकृत् ६ होमकृत् ७ श्राद्धकार ८ समित्पुष्पकुशाग्न्यंबुमृ
धाक्षतान्नपाणि भैक्ष्याज्यपाणिदेवपूजानिरतानामभिवादनेत्रिरात्रमुपवासः एतैरन्याभिवादने एषामप्येवम् आन्हि
कविच्छेदेपित्रिरात्रम् ॥ बहुदिवसविच्छेदेद्विगुणं ॥ निमंत्रितस्यान्यत्रभोजनेत्रिरात्रम् ॥ अकामतःसकृत् ॥ निमंत्रित
स्यभोजनाद्यदानेयतिचांद्रायणंम् ॥ इंद्रधनुःपलाशाग्न्योरन्यस्यप्रदर्शनेउपवासोधनुर्दंडश्चक्रमेणदक्षिणा ॥ दंड्यो
त्सर्गेराजैकरात्रमुपवसेत् ॥ त्रिरात्रंपुरोहितः ॥ अदंड्यदंडनेकृच्छ्रंपुरोहितः ॥ त्रिरात्रंराजा ॥ पादप्रतापनंकृत्वाकृत्वावन्हिं

नथाह्यध॥ कुशैःप्रमृज्यपादौतुदिनमेकंगृही भवेत् ॥ भूमिकन्यानृतेमासंगोमूत्रयावकपानम् ॥ दुःस्वप्नारिष्टयोर्दर्शनेसघृतहिर
ण्यदानम्विप्रयोर्विप्राग्न्योर्दंपत्योर्गोविप्रयोर्विप्रपीडयोर्गोबलीवर्दयोर्विष्णुगरुडयोर्मध्यगमनेयत्द्विजस्यसांतपनं॥ वेदा
ध्ययनहोमसान्नाय्यांगदोहविवाहकालेष्वेषामंतरागमने चांद्रायणम् ॥ कुनखिश्यावदंतौप्राजापत्यंकृत्वादंतान्नखांश्चो
द्धरेयाता॥क्षत्रियरक्षणे पृष्टंदत्वाप्राणपरायणः संवत्सरव्रतंकुर्यात् ॥ एतदेवफलप्रदवृक्षच्छेदेच॥ तीर्थयात्रांविनासिंधु
सौवीरसौराष्ट्रांस्तथाप्रत्यंतवासिनः॥ अंगवंगकलिंगांध्रान् गत्वासंस्कारमर्हति॥ एवंमगधदेशेपि॥ कर्मनाशाजलस्पर्शक
रतोयाविलंघनगंडकीबाहुतरणेष्वप्येवं॥ नीलवस्त्रादिधारणेकेशनिर्मितधारणेचोपवासः पंचगव्यपानम् ॥हिरण्योदकपा
नंचपरेद्युः॥ नीलीमध्यगमनेत्रयः प्राणायामाः॥ नीलीजदंतधावनेवस्त्रधारणव्रतम् ॥ रोमकूपेषुनीलीरजःपतनेवर्णमात्र-
स्यतसकृच्छ्रम् ॥ नीलींविक्रीणन्पालयंस्तद्वृत्याजीवंश्चपतति॥ विरक्तश्चेत्त्रिभिःकृच्छ्रैःशुध्येत् ॥ नीलींधृत्वामैथुनेउत्प
न्नोगर्भश्चांडालोभवति॥ नीलींधृत्वामृतःषष्टिवर्षाणिविष्टायांकृमिर्भवति॥ विधवयानीलीधारणेतद्भर्तुर्नरकः॥ नीलीं
धारणपूर्वकमन्नदानेदातुर्भोक्तुश्चसांतपनम् ॥ नीलीदारुभेदनेनरुधिरदर्शनेचांद्रायणम् स्त्रीधृताशयनेनीलीब्राह्म-
णस्यनदुष्यतिकंबलेपट्टसूत्रेचनीलीसंगोनदुष्यति॥ आपांक्तेयपंक्तिभोजनेउपवासः परेद्युः पंचगव्यंच॥ मत्यकोदिमेहने
आत्मनः सकृद्दर्शनेचसूर्यविप्रंगांवापश्येत् ॥ क्षत्रियवैश्ययोरभिवादनेविप्रस्योपवासः॥ शूद्रस्याभिवादनेत्रिरात्रमुपवासः

शूद्रस्याभिवादनेत्रिरात्रमुपवासः गृहस्थस्यानापदि सिद्धान्नभिक्षाकरणे दशरात्रं वज्रकृच्छ्रसंबंधिद्रव्यपानं ॥ आपदि त्र्यह
म् ॥ देवगुर्वाद्यभिमुखनिष्ठीवने जीवनविरोधेन जिह्वां दहेद्धिरण्यं दद्यात् ॥ प्रतिमाभेदने देवालयवापीकूपारामभेदने चेदं विष्णु
र्मोनस्तोके विष्णोः कर्माणि पादोस्यामिति च तस्य आज्याहुती हुत्वा यां देवतामुच्छेदयति तस्यैव ब्राह्मणान् भोजयेत् ॥ प्रतिमात्र
मृन्मयी पूजितोज्झिता च ॥ प्रायश्चित्तस्याल्पत्वात् ॥ तदत्र प्रतिमातारतम्येन दंडप्रायश्चित्ताधिक्यं योज्यम् दारिद्र्यक्रोध-
मात्सर्यादिभर्तुरतिक्रमेति कृच्छ्रः पर्वणि मैथुने सचैलं स्नात्वा वारुणीभिर्मार्जयेत् ॥ श्राद्धदिने मैथुने उपवास एव ॥ स्वपत्न्यां
रजस्वलायां गत्वोपवासत्रयपूर्वकं चतुर्थे घृतप्राशनम् ॥ कामतश्चेत्सप्तरात्रमुपवासः ॥ अकामतोभ्यासे कृच्छ्रः ॥ कामतोत्यंता
नवच्छिन्नाभ्यासेन षण्मासिकव्रतम् ॥ त्रैवार्षिकमिति स्मृत्यर्थसारे ॥ कामतोभ्यासेमात्रेतु प्रथमेन्हि पराकम् ॥ द्वितीये सांत
पनम् ॥ तृतीये प्राजापत्यमिति ॥ अकामतः प्रवृत्तस्य रेतः सेकात् प्राक् निवृत्तस्य सचैलं स्नानं महाव्याहृतिभिर्होमश्च ॥ षण्मासोत्तरं
गर्भिणीगमनेप्येवम् ॥ यदा तु स्त्रीसंभोगमंतरेणाप्यकामतो हृष्टाश्चरमधातुविसर्गस्तदा स्कन्नं रेतो यन्मद्य रेतः पृथिवी पुनर्मामैत्वित्याभि
मंत्र्य तेन रेतसा स्तनयोर्भ्रुवोश्च मध्यं अनामिकया स्पृशेत् ॥ कामतः प्राणायामत्रयसहितसहस्रगायत्रीजपः ॥ वानप्रस्थयत्योश्चांद्रा
यणम् ॥ गृहस्थस्य यत्नपूर्वकं धातुविसर्गे वारुणीभिर्मार्जनमित्यपि क्वचित् ॥ स्वप्ने तु त्रिर्नमस्काराः सूर्यस्य गृहस्थैः कार्याः तयोस्त्व-
घमर्षणत्रयम् ॥ ब्रह्मचारिणस्तु स्वप्ने रेतस्स्खलने स्नात्वार्कं संपूज्य ॥ त्रिः पुनर्मामेत्यृचं जपेत् ॥ कामत उत्सर्गे संवत्सरं व्रतं चरेत् ॥ प्र

प्रा॰शे॰
१२

येनरोगेन स्वप्नेगृहस्थादीनांस्खलनेआदित्यार्चनादिपूर्ववत्॥ नैष्ठिकब्रह्मचारिणोद्विगुणम्॥ वमनेस्नात्वापंचगव्यपानम्॥ पूर्वेदि-
नभुक्तस्यवमनेउपवासोपि॥ मांसमाषमसूरवमनेउपवासत्रयंस्नानपूर्वकप्राणायामत्रयंघृतप्राशनंच॥ दिवास्वापनग्नस्त्रीदर्शनन-
ग्नस्वापश्मशानाक्रमणहयारोहणपूज्यपूजातिक्रमाजीर्णश्मश्रुकर्मदुर्जनस्पर्शेषुस्नानेकामतोनक्तभोजनम्॥ गर्भाधानादिचूडांतसं-
स्कारेष्वेकैकलोपेपादकृच्छ्रं॥ चूडाया अर्धकृच्छ्रं॥ अनापदि द्विगुणम्॥ प्रायश्चित्तोत्तरं तत्तत्संस्कारकरणम्॥ गर्भाधानमात्राकर-
णेगोदानपूर्वकंपुंसवनंकार्यम्॥ संवत्सरंनित्यक्रियालोपेतु षष्टिप्राजापत्यानि अक्रोशनानृतवादयोरेकस्त्रयोवाउपवासाः॥ अ-
कामतोभ्यासेनमहत्कृच्छ्रम्॥ निषिद्धकाष्ठैर्दंतधावनेगोदर्शनम्॥ गृहीतव्रतस्यप्रमादादिनाभंगेउपवासत्रयम् पुनर्व्रतग्रहणंच॥-
विप्रस्याष्टवर्षपर्यंतं क्षत्रवृत्त्याधनार्जनेचांद्रायणम्॥ वैश्यवृत्तौषण्मासान्॥ शूद्रवृत्तौतु सकृदेवपुनरुपनयनपूर्वकंकृच्छ्रम्॥ शू-
द्रस्यद्विजकर्मकरणेप्येतत्॥ तद्धनत्यागोत्तरमिदंप्रायश्चित्तम्॥ स्त्रीधनोपजीवनेस्त्रियैतद्धनंदत्वाचांद्रायणं॥ भार्यायामुखमैथु-
नेकृच्छ्रम्॥ गोयुक्तयानस्थस्यमैथुनेतदर्धम्॥ अकामतोभ्यासेस्नानमात्रम्॥ बस्तिकर्मणिप्रच्छर्दनविरेचनयोरभ्यासेशिश्नकृ-
च्छ्रः॥ अन्यतःस्नानम्॥ देवागारशिलादिनास्वगृहकरणेकृच्छ्रं यतिसांतपनंच॥ गुरुप्रतिश्रुतवस्त्रकरणेतप्तकृच्छ्रसहितम् चांद्रा-
यणम्॥ भोजनकालेपरिगृहीतमौनत्यागेतदन्नत्यागः॥ अर्धभुक्तान्नपात्रेणजलपानेचोपवासः॥ इष्टापूर्तादिशुभाशुभमहाकर्मस्थ
ऋत्विगाचार्यादीनांद्वादशकृच्छ्रास्तदर्द्धंवासर्वप्रायश्चित्तं॥ श्राद्धोपवासादिनिषिद्धदिनेषुदंतधावनेगायत्र्याः शतसंयुतांबुपानम्

कन्याया विवाहात्पूर्वं रजोदर्शनेन सितान ऋतून् गणयित्वा तत्संख्यया गोदानं कृत्वा अथवेशक्तावेकां गां सुवर्णशृंगादिगोदानविधिना द-
त्वा त्वप्यशक्तौ सदक्षिणमन्नं विप्रेषु दत्वा त्रिदिनमुपोषितां चतुर्थरात्रौ गव्यपयोमात्राहारां कन्यां निवृत्तरजस्कां भूषितां दद्यात् ॥ तामु-
द्वहन्वरस्तच्छुध्यै कूष्मांडमंत्रैर्घृतं जुहुयात् ॥ विवाहहोमकाले उपस्थिते आरब्धे विवाहे वा रजोदर्शने तु स्नापयित्वा तां युंजाने तिनै-
त्तिरीयमंत्रेण हुत्वा विवाहं प्रवर्तयेत् ॥ सुरापात्रगंधमाघ्राय सोमपो ब्राह्मणोऽप्सु निमग्नस्त्रीन्प्राणायामांस्त्रिरघमर्षणजपं वा कृत्वा
घृतप्राशनं कुर्यात् ॥ असोमपोऽप्सु इतरस्यामंत्रकं प्राणायामाः ॥ म. द्यगंधने तदर्धम् ॥ साक्षात्सुराघ्राणं सुरापानवत् ॥ अम-
त्याघ्राणे प्राणायामास्त्रयः ॥ मद्यविण्मूत्रपूतिगंधानामन्यतमाघ्राणे त्रिः प्राणायामाः ॥ दर्शने स्पर्शने च स्नानं घृतप्राशनं च ॥ सुरापस्पर्शे-
स्नानं पंचगव्यं च ॥ तत्घ्राणेऽप्सु त्रिः प्राणायामाः ॥ असोमपस्यानप्सु इतरस्यामंत्रकम् ॥ मद्यविण्मूत्रविप्रुड्भिः संस्पृष्टे मुखमंडले मृ-
त्तिका गोमयैः प्रक्षाल्य पंचगव्यं पिबेत् ॥ मदिरां दत्वा स्पृष्ट्वा प्रतिगृह्य च स्नात्वा कुशांबु त्र्यहं ॥ संक्रांत्यादिनिमित्तेष्व स्नात्वा भोजनेऽष्टसह-
स्रं गायत्रीजपः शूद्रादिस्पर्शनिमित्तेनूपवासः ॥ चांडालादिस्पर्शनिमित्ते स्नात्वा भुक्तौ त्रिरात्रं कार्यं वा ॥ मत्याच्चांद्रं सकृत् ॥ कामाभ्यासे
द्विगुणम् ॥ रजकादिस्पर्शनिमित्ते तदर्धम् ॥ पाने त्वेक उपवासः ॥ चांडालादिरजकादिस्पृष्टस्पर्शनिमित्ते त्वस्नात्वा भोजने उपवासः ॥ नि-
त्यस्नानमकृत्वा भुक्तौ उपवासस्त्रिरात्रं वा ॥ नैमित्तिकस्नाने सर्वत्राष्टशतगायत्रीजपः ॥ कामकृते सहस्रत्रयं ॥ अमेध्याद्यस्पृश्यस्प-
र्शने त्वस्नात्वा भुक्तौ गृहस्थादेस्त्रिरात्रम् ॥ मत्या षट्त्रिरात्रम् ॥ व्रतिनः कायं चांद्रं वा ॥ श्वपाकादिस्पर्शनिमित्तेष्वस्नात्वा भुक्तौ मत्या त्रि-

रात्रं ॥ हस्तस्थापितकवलादिभोजने ॥ अब्राम्हणसमीपभोजनेदुष्टपंक्तौभोजनेबालांस्त्यक्त्वाभोजनेशूद्रहस्तेनभोजनेपानेचामत्यान
त्कस्य ॥ मत्यानूपवासःपंचगव्यंच ॥ शूद्रपंक्तौभोजनेद्विरुपवासः॥ आसनारूढपादोवावस्त्रार्धेमाहृतोपिवा ॥ मुखेनधमितंवापिभुक्त्वा
सांतपनंचरेत् ॥ अनाचम्यभक्षणेष्टशतजपः॥ भोजनेनूपवासः॥ आपोशनंविनाभोजनेप्येवं ॥ अभ्यासेसहस्रगायत्रीजपः॥ भोक्तु
कामस्यापोशनात्पश्चादभ्यवहारात् पूर्वंमूत्रपुरीषगमनेसचैलोबहिराप्लुवः॥ षट्प्राणायामाश्च ॥ भुंजानस्यमस्तकेविष्ठादिपत
नेऽन्नंत्यक्त्वानद्यांस्नानंत्रिःप्राणायामाः॥ भार्ययासहोदरैर्वासहभोजनेदिनत्रयमभोजनम् ॥ ज्ञातिभिःसहभोजनेत्वहोरात्रम् ॥
ऋतौभूमौभोजनेहोरात्रंयावकाहारः पंचगव्यपानंच ॥ घृतहीनाहुतिपंचकभोजनोत्तरं सघृतभोजनात्यंताभ्यासेचांद्रायणं ॥ चांडा
लश्वपचक्षत्तोग्रसूतवैदेहिकमागधायोगवाश्चांडालाद्याः॥ विप्रायांशूद्राज्जातश्चांडालः॥ क्षत्तुरुग्रायांजातःश्वपचः॥ क्षत्रियायां
शूद्राज्जातःक्षत्ता ॥ राजन्यात्शूद्रायांजातउग्रः॥ विप्रायांवैश्यात्जातःसूतः॥ विप्रायांक्षत्रियात्जातोवैदेहिकः॥ क्षत्रियायांवैश्या
ज्जातोमागधः॥ वैश्यायांशूद्राज्जातोऽयोगवःशौंडिकादयश्चकापालिकनिर्णेजकधातुकलुब्धकांत्यजाः॥ अंत्यजाश्चचर्मकार
जकनटबुरुडकैवर्तकमेदभिल्लाःसप्त ॥ सूतिकारजस्वलापतितशववाहकषंढदेवलकविसृष्टाग्न्यारूढपतिताभिशस्ताअंत्यजाश्च
श्वादयश्चांत्यजाद्याः॥ श्वविटवराहखरोष्ट्राद्याःश्वादयःएषामेवपंचमाइतिसंज्ञा ॥ गोमांसभक्षकोयस्तुविरुद्धंबहुभाषते ॥ सर्वाचा
रविहीनश्चम्लेंछइत्यभिधीयते ॥ सएवयवनदेशोद्भवोयावनः॥ तत्रस्पृष्टिसमयेचांडालांत्यजादिदर्शनेआचमनपूर्वकप्राणायाम

त्रयंभोजनत्यागेसति ॥ तदत्यागेनूपवासः पंचगव्यंच ॥ मूत्राद्युत्सर्गानंतर शौचकरणंविनाभोजनेत्रिरात्रंयावकपानमुपवासोवा ॥ जल
पानेनूपवासः पंचगव्यंवा ॥ मूत्राद्युत्सर्गवेलायांभोजनेपानेउपवासोव्याहृतिभिः सर्पिषा ष्टोत्तरशतहोमः ॥ कांजिकादिना शौचंकृत्वा
भोजनेपुनर्जलेन शुद्धिंकृत्वोपोष्य पंचगव्यंपिबेत् ॥ एकपंक्त्यांतुभुजानोविप्रोविप्रंयदास्पृशेत् ॥ शिष्टंनदन्नंभुक्त्वेवगायत्र्यष्टशतंज
पेत् ॥ शिष्टंपात्रस्थिनंनदुत्तरंभुक्तेर्विरामः ॥ भोजनोत्तरमुच्छिष्टयोः स्पर्शेउभयोरपिसद्यःस्नानंशतजपोवा ॥ नादृशस्य क्षत्रियवैश्यस्प
र्शेक्रमेणनक्तोपवासौ ॥ नक्तंघृतप्राशनमेवस्नानंजपश्चेतिस्मृत्यर्थसारे ॥ भोजनोत्तरमेवतयोः स्पर्शेउपवासउपवासौवा ॥ भुक्तोच्छि
ष्टस्यशूद्रश्वादिस्पर्शेतूपोष्यपरेद्युर्नक्तम् ॥ परेद्युः पंचगव्यपानं ॥ भुक्त्वानाचमेपीदं ॥ इदंकामतः ॥ अकामतस्तु स्नानम् शतगायत्री
जपश्च ॥ भुक्तोच्छिष्टानाचांतस्यामेध्यमूत्रादिस्पर्शे पंचगव्यपानम् ॥ उच्छिष्टस्यचांडालादिस्पर्शेत्रयउपवासाअष्टाधिकशतगाय-
त्रीजपश्च ॥ चतुर्थेपंचगव्यंचमिलित्वापादोनप्राजापत्यम् ॥ ज्ञात्वाबालात्स्पर्शेद्विगुणम् ॥ अन्येतुअनुच्छिष्टस्यचांडालादिस्पर्शे-
स्नानं ॥ उच्छिष्टस्यतत्स्पर्शेपूर्णप्राजापत्यं ॥ ज्ञात्वातुद्विगुणमित्याहुः ॥ उच्छिष्टस्यचांडालान्नस्पर्शेचांद्रम् ॥ अधरोच्छिष्टेत्रिरात्रम्
भुक्तोच्छिष्टस्यानाचांतस्यांत्यजशौंडिकादिभिर्ज्ञानतः स्पर्शेप्राजापत्यं ॥ अर्धोच्छिष्टेपादः सर्वत्र ॥ येनास्येग्रासःक्षिप्तोनविगीर्णःसो
र्धोच्छिष्टः ॥ भुक्तोच्छिष्टस्यरजकादिस्पर्शेत्रिरात्रंघृतप्राशनम् ॥ मूत्राद्युत्सर्गोत्तरअकृतशौचः अधरोच्छिष्टभोजनाद्युत्तरमनाचां
तऊर्ध्वोच्छिष्टः ॥ तत्राधरोच्छिष्टस्यविप्रस्यचांडालादिस्पर्शेत्रिरात्रोपवासपूर्वकंपंचगव्यम् ॥ तस्यरजस्वलारजकादिस्पर्शेएकउ

पवासः॥ अनुक्तेषु यत्रानुच्छिष्टस्य स्पर्शे स्नानं विधीयते॥ तत्रोच्छिष्टस्पर्शे त्रिरात्रं कार्यं वा॥ ऊर्ध्वोच्छिष्टार्धमधरोच्छिष्ट इति कल्प्यं॥ भुंजान-
स्य रजस्वलादिस्पर्शे शिशुक्तकृच्छ्रः प्राणायामशतं च॥ अमत्यात्र्यहं॥ भुंजानस्य गुदस्रावे शौचं कृत्वा पोष्य पंचगव्यम्॥ भुंजानस्य शौच मा
नौ मुखस्थग्रासं त्यक्त्वा स्नानम्॥ तद्ग्रासाशने उपवासः॥ सर्वाशने त्रिरात्रं॥ भुंजानस्यानुच्छिष्टेन सगोत्रेणासगोत्रेण वा स्पर्शे भोजनं
विरम्य शुद्धिः॥ भुंजानस्य भुक्तोच्छिष्टेन सवर्णेन स्पर्शे स्नानं जपो वा॥ भुंजानस्य शूद्रस्पर्शे उपवासः पंचगव्यं च॥ भुंजानस्य चांडाला
दिशब्दश्रवणे भोजनं विरम्य शुद्धिः॥ भोजने स्नात्वाष्टशतजपः उपवासो वा॥ मूत्रादिकाले त्यजादिस्पर्शे तु दिनमेकं चरेन्मूत्रे पुरीषे च दि-
न द्वयम्॥ दिनत्रयं मैथुने च पाने स्याच्चतुष्टयं॥ एवं रजस्वलाश्वसूकरशवमद्यभांडादिस्पर्शेपि॥ चांडालादिस्पर्शे सार्धमेतत्॥ द्विगुण
मित्यन्ये॥ उच्छिष्टतैलाभ्यक्तस्य कृतश्मश्रुकर्मणः कृतमैथुनस्य चाचमनं विना मूत्रादिकरणे एकोपवासस्त्रिरात्रं वा॥ ऊर्ध्वोच्छिष्टस्य
श्वकाकादिविष्ठास्पर्शे उपवासः॥ अधोच्छिष्टे स्नानम्॥ उच्छिष्टस्य सूर्यादिदर्शने उपवासः॥ ऊर्ध्वोच्छिष्टस्य पलांडुलशुनादिस्पर्शे त्रिरा
त्रं कुशजलपानं गायत्रीजपश्च॥ अकामत उपवासद्वयम्॥ अधरोच्छिष्टस्य तत्स्पर्शे एक उपवासः॥ अनुच्छिष्टस्य तत्स्पर्शे स्नात्वा नक्तं स
र्वांगावच्छिन्नस्पर्शे एकनक्तमिति केचित्॥ कराद्यार्द्रेषत्स्पर्शेप्येतदेव॥ जान्वधःकरास्पर्शे स्नानं॥ ततः आनाभेरुपवासः॥ तत ऊर्ध्वंस्प
र्शे त्रिरात्रं॥ अशुचिलशुनादिस्पृष्टिस्पर्शने तु॥ अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति॥ तं स्पृष्ट्वान्यो न दुष्येत सर्वद्रव्येष्वयं विधिरिति॥
एवं भांडेष्वपि स्पृष्टभांडस्पर्शे योज्यम्॥ स्त्रीबालवृद्धमक्षिकागृहमार्जारमूषकादयो नित्यं शुद्धाः उच्छिष्टकाले कर्मानुष्ठाने च मार्जारस्य

र्शे स्नानमितिमिताक्षरा ॥ पीतावशिष्टमुखनिर्गततोयपाने मत्याभ्यासे चांद्रं पराकोवा ॥ पीतावशिष्टपात्रांबुपाने वामहस्तेनवापानेनदर्धं
त्र्यहंवा ॥ अज्ञानात्सकृच्छूद्रोच्छिष्टभोजने त्रिरात्रोपवासः ॥ चतुर्थे पंचगव्यपानं ससाहं पंचगव्यं कामतः ॥ एतदेव योषोच्छिष्टभोजनेपि
क्षत्रियाद्युच्छिष्टभोजने पादोनम् ॥ अकामतोभ्यासे चांद्रम् ॥ कामतोद्विगुणमभ्यासे भार्ययासह भोजने तदुच्छिष्टभोजने च दोषाभा
व आपद्विषयो विवाहविषयोवा ॥ ज्येष्ठभ्रातृपित्राद्युच्छिष्टभक्षणे दोषोन ॥ विप्रोच्छिष्टाशने एकाहः ॥ कामतोभ्यासे कृच्छ्रं ॥ उच्छि
ष्टमात्रतद्भोजनोत्तरभोजनपात्रेवशिष्टम् ॥ चांडालस्पृष्टकांस्ये चांडालाद्युच्छिष्टकांस्येच भोजने कृच्छ्रं ॥ जलपाने पादकृच्छ्रम् ॥ र
जकादावर्धनम् ॥ चांडालेन सहैकवृक्षमारुह्य तत्र फलभक्षणे सचैलंस्नानम् ॥ चांडालादिस्पृष्टभोजने त्रिरात्रंमत्याकायम् ॥ चांडा-
लादिहस्तपाचितभोजने कायं चांद्रं च ॥ तद्धस्तेन भोजने द्विगुणम् ॥ चांडालाद्युच्छिष्टभोजने चतुर्गुणम् ॥ अभ्यासे कृच्छ्राब्दम् ॥ अ
त्र सर्वत्र चांडालान्नभोजने पुनः संस्कारः ॥ चांडालादिदृष्टान्ने तूपवासः पंचगव्यं च ॥ चांडालादिस्पृष्टांबुपाने उपवासः ॥ तत्स्पृष्टस्य
पृष्टिविषयेतदर्धम् ॥ चांडालादिसंस्कारे भोक्तुः पक्षं गोमूत्रयावकं कृच्छ्रंवा ॥ चांडालादिर्यस्य गृहे अज्ञातस्तिष्ठति तस्यान्नममत्याभु
क्त्वा प्राजापत्यम् ॥ मत्या पराकः ॥ चांडालादिभांडसंस्पृष्टांबुपाने गोमूत्रयावकं त्रिरात्रं पुनः संस्कारश्च ॥ शूद्रोदकपाने उपोष्य कुशप-
लाशबिल्वोदकपानम् ॥ चांडालादिस्पर्शोत्तरमूत्राद्युत्सर्गे त्रिरात्रमुपवासो जातवेदसजपोवा ॥ रजकादिस्पर्शोत्तरमधरोच्छिष्टे तूपो
ष्य पंचगव्यम् ॥ रजस्वलासूतिकाश्वसूकरादिपतितकुणिकुष्ठिकुनख्यस्पृश्याशौचिनः स्पृष्ट्वा भोजने एतत् स्पृष्टान्ने भोजने च मत्या

कार्यं॥ अमत्यार्द्धम्॥ कुणिर्हस्ताविकलः भोजनकालेन्नममेध्यमक्षिकाकेशादिदूषितं चेदनंतरमपः स्पृशेत्॥ तच्चान्नं भस्मना मृदांबुना
वा स्पृशेत् अस्थ्यादिदूषिते स्नानं घृतप्राशनं च॥ भोजनकाले दंतपाते चैवं॥ रक्तादिदृष्टौ नूपवासः॥ मुखे रक्तदर्शने त्रिरात्रम् तद्द
क्षणे ब्राम्हीरसपानं तादृशजलपाने कुशोदकम्॥ अशक्त एषु निमित्तेषु ब्राम्हीं पिबेत्॥ अमेध्यकेशकीटकादिभिः सह पाचितान्नस्य
त्यागः भक्षणे नूपवासः पंचगव्यं च॥ वामहस्तदत्तान्न भोजने एकपंक्तावेकस्मिन्नुत्थिते पश्चाद्भुक्तौ चोपवासो नक्तं पंचगव्यं च॥ मार्जा
रकाकाखुनकुलगवाद्युच्छिष्टस्याल्पस्य भोजने ब्राम्हीरसः॥ अधिकभोजने उपवासः॥ पूर्णाहारे त्रिरात्रम्॥ कामतः कृच्छ्रपादः॥ अ
भ्यासे कृच्छ्रः॥ श्वोच्छिष्टभोजने मासं यावकव्रतम्॥ विप्रस्य शूद्रगृहभोजने मनस्तापात् शुद्धिः॥ कामतश्चेन्द्रुपदायाः शतजपः
शूद्रभाजनभिन्नभाजनयोर्भोजने उपवासः पंचगव्यं च॥ मत्यात्रिरात्रम्॥ भिन्नकांस्ये अमत्यात्रिरात्रम्॥ मत्याकायम्॥ वटार्का
श्वत्थकुंभीतिंदुककोविदारककदंबवल्लीपलाशब्रम्हवृक्षपत्रेषु भोजने चांद्रम्॥ पद्मपत्रे वानप्रस्थयत्योश्चांद्रफलम्॥ अन्येषां चांद्रप्राय-
श्चित्तम्॥ दुग्धाज्यादिपेयद्रव्यहस्तस्योच्छिष्टेन स्पर्शे न तद्द्रव्यसाहित्येनाचमनाच्छुद्धिः॥ चांडालस्योच्छिष्टे दाने पि द्विरुपवासः शूद्रेणाछि
न्नयज्ञोपवीतो ब्राम्हणो मंत्रेणान्यत्तुपरिधायोपवसन् गायत्रीशतं जपेत्॥ ज्ञानतो द्विगुणम्॥ एवमन्यत्राप्यनादेशे शतगायत्रीजपः॥ वि
प्रेणाच्छिन्नयज्ञोपवीते महासांतपनद्वयम्॥ चांडालादिपुल्कसम्लेंछभिल्लपारसीकमहापातकिबौद्धशैवपाशुपतलोकायतिकनास्ति
कोन्मत्तांत्यजनापितविकर्मस्थद्विजोदक्यासूतिकापतितशवस्पृष्टिशावसूतकचैत्ययूपमृतहारककापालिकवनमार्जारस्पर्शे सचै-

लंस्नानम् ॥ कामतस्त्वग्निस्पर्शनघृतप्राशनमधिकम् ॥ अत्रशैवपाशुपतौवेदविरुद्धतदागमोक्तानुष्ठानारौ ॥ रजकचर्मकव्याधकैवर्त
शाकुनिकनटधीवरजालोपजीवनिर्णेजकसौत्रिशकैलूषसर्ववर्णगवनिताचक्रध्वजिवध्यघातिश्वगर्दभग्रामसूकरकुक्कुटैःशिरो
व्यतिरिक्तांगस्पर्शेतदंगक्षालनवस्त्रप्रक्षालनपूर्वकमाचमनम् ॥ शिरःस्पर्शेस्नानंकामतःस्पर्शेद्वादशवारंमृज्जलैःशोधनमधिक
म् ॥ इदंसर्वमनातुरस्य ॥ आतुरस्यत्वाचमनमेव ॥ चांडालादिस्पर्शेप्येतत् ॥ शूद्रनिषादस्पर्शेआचमनम् ॥ स्मृत्यर्थसारेतुशूद्र
स्पर्शेस्नानम् ॥ निषादस्पर्शेसचैलस्नानमिति ॥ चिरकालंचांडालादिच्छायारोहणेस्नानंघृतप्राशनंच ॥ तल्लंघनेप्येवं ॥ हीनशूद्र
स्पर्शेस्नानम् ॥ प्रागुक्तचांडालादिभिर्व्यवहितस्पर्शेस्नानमेव ॥ इदंमतिपूर्वत्वेसचैलमन्यत्राचैलम् ॥ काष्ठादिद्वारेणतत्स्पर्शेयदं
गस्पर्शेस्तदंगस्यवस्त्रादेश्चक्षालनमाचमनंच ॥ नौसंक्रमादौनस्पर्शदोषः ॥ सर्वांगावच्छेदेनचांडालादिस्पर्शेत्रिरात्रमुपवासः ॥ चां
डालादिभिरेकशाखारोहणेविप्रस्यसचैलंस्नानम् ॥ कामतोष्टशतजपश्च ॥ अभ्यासेतूपवासपूर्वकंपंचगव्यपानम् ॥ एकपाषाणा
वरोहणेशाखावत् ॥ चांडालादिस्पर्शेरात्रावपिस्नानम् ॥ नद्यादिवोद्धृतजलेनाग्निसन्निधौस्वर्णजलंनिक्षिप्यकार्यम् ॥ चांडालशव
स्पर्शेकृच्छ्रः ॥ चांडालादिभिर्यानशय्यासनादौत्रिरात्रोपवासः ॥ विप्रेणचांडालस्यव्रणवंधनाभ्यंजनरुधिरोत्पादनादौविप्रस्यप्राजा
पत्यम् ॥ चांडालेनविप्रस्यैषुकृतेष्वप्येवम् ॥ अनभ्यासेत्रिरात्रम् ॥ अभ्यक्तस्यचांडालादिस्पर्शेएकोपवासपूर्वकंपंचगव्यम् ॥ चांडालाय
कामतः ॥ क्रतुमदर्शनेनन्मृत्यदर्शनेतद्गीतश्रवणेभैषज्यक्रियायांचद्विरुपवासः ॥ चांडालादिदर्शनेरविदर्शनपूर्वकंपंचदशप्राणामा

अभ्यासे॥ अन्यथारविदर्शनमेव॥ चैतन्यव्यवधानेनस्पर्शेस्नानम्॥ काष्ठादिव्यवधानेनस्पर्शेनदंगक्षालनमुक्तम्॥ एकशाखापाषाणयो
रारोहणेतुस्नानम्॥ वचनात् एतैः संभाषणेष्टोत्तरशतगायत्रीजपः॥ अमत्याचेद्विप्रसंभाषणम्॥ चांडालाद्युपदेशे प्राजापत्यम्॥ चांडाल
कूपतीर्थनिषेवणेत्रिरात्रम्॥ चांडालेनैकपथगमनेगायत्रीस्मरणमल्पकालसाध्ये॥ अन्यथासचैलस्नानम्॥ चांडालादेः स्ववेश्मन्यवस्था
नेत्र्यहम्॥ दधिसर्पिःपयोभिःसहगोमूत्रयावकपानंत्रिसंध्यमवगाहनेन॥ ततस्त्र्यहंदध्ना॥ त्र्यहंसर्पिषा॥ ततः त्र्यहंपयसा॥ पलत्रयंद
धिपयसोः सार्पिषः पलम्॥ वस्त्राणांजलेनक्षालनम्॥ मृन्मयानांत्यागःकार्यः॥ कुसुंभगुडकार्पासलवणसर्पिर्धान्यानिद्वारेकृत्वावेश्म
निपावकंदद्यात्॥ ततोब्राह्मणभोजनं॥ त्रिंशद्गावोवृषभश्चैकोदक्षिणा॥ पुनर्लेपनखननहोमजप्यैःशुद्धिः॥ अधिकसंसर्गेअधिकंकल्प्य
म्॥ वृद्धयोगीबालापत्यगर्भिणीनांप्राजापत्यम्॥ बालानांप्रहरद्वयमभोजनम्॥ रजकादिष्वेतदर्धम् गृहदाहवर्ज्यम्॥ चांडालगृह
प्रवेशेचांडालैःसहवृक्षछायायांगृहेवावस्थानेमासंकृच्छ्राभ्यासः॥ द्विमासंशूद्रस्य॥ क्षत्रियवैश्ययोश्चतुस्त्रयः॥ अनिष्टगंधस्पर्शशब्द
रूपवाक्यानामाघ्राणस्पर्शनश्रवणदर्शनकथनेषुरविदर्शनम्॥ रुद्रनिर्माल्यस्पर्शेसचैलस्नानम्॥ शैवसौरनिर्माल्यनैवेद्यभक्षणेचां
द्रम्॥ अभ्यासेद्विगुणम्॥ अमत्याभ्यासेसांतपनम्॥ अनापदिहरेरन्यनैवेद्यभक्षणएवमेव॥ विष्णोरनिवेदितभोजनेर्धकृच्छ्रप्राय
श्चित्तम्॥ हरेर्निर्माल्यनैवेद्यभक्षणेचांद्रायणफलमितिस्मृत्यर्थसारे॥ धनहर्तापिप्रेतक्रियायाअकरणेतद्भ्रूणवधेयत्प्रायश्चित्तंतदर्धं
कुर्यात्॥ तदेवेतिकेचित्॥ गोविप्रचांडालादिहतोद्बंधगरदाग्निदात्मघातिशृंगिदंष्ट्रिविषवह्निजलविद्युत्सरीसृपहतसंकरजातिप

नितशवस्यवहनदहनोदकदानादिक्रियाकरणेतप्तकृच्छ्रः॥ अमतिपूर्वत्वेगोमूत्रयावकाहारेणकृच्छ्रम्॥ नच्छवस्पर्शमात्रेकेवलेश्रुपा
तेचैकोपवासः॥ यंकंचित्प्रेतमुद्दिश्यतद्बांधवैःसहाश्रुपातेस्थिसंचयनोत्तरंकृतेस्नानम्॥ ततःपूर्वंतुसचेलंतत्॥ शूद्रप्रेतानुगमनेद्वि
जस्यस्नानमष्टोत्तरसहस्रगायत्रीजपश्च॥ द्विजप्रेतानुगमनेघृतप्राशनम्॥ शूद्रस्यतुतत्रस्नानमेव॥ अनशनजलाग्निपतनानिसंकल्प्य
ततोप्रभ्रष्टस्यसन्यस्तस्यपुनर्गार्हस्थ्यपरिग्रहेणगृहस्थतामिच्छतश्च कृच्छ्रत्रयपूर्वकंचांद्रायणत्रयपूर्वकंवापुनर्जातकर्मादिसंस्का
रकरणम्॥ षण्मासकृच्छ्राभ्यासपूर्वकंवा॥ अत्रशक्तिसकृदभ्यासकालाद्यपेक्षयाव्यवस्था॥ केचिदत्यसमर्थस्यतप्तकृच्छ्रं॥ चांद्रा
यणंतुबलात्कारेणपरप्रेरणयावासन्यस्तस्येत्याहुः॥ येत्वात्मघाताद्यशास्त्रीयमरणेनमृतास्तत्पुत्रैश्चांद्रायणतप्तकृच्छ्रद्वयात्मकं
प्रायश्चित्तंकृत्वैवतत्क्रियाःकार्याः क्रोधादिनात्मत्यागाध्यवसायमात्रेउपवासत्रयम्॥ अध्यवसायंकृतिपर्यव्यापारंकृत्वास्वतएव-
निवृत्तौघृताभ्यक्तोमौनीप्राणायामान्कृत्वागायत्रींजपन् त्रिरात्रमुपवसेत्॥ अन्येननिवर्तितस्यद्विगुणम्॥ अध्यवसायशस्त्रादि
क्षतकरणेप्राजापत्यम्॥ दृढक्षतेचांद्रम्॥ चितिप्रष्टातुयानारीमोहाद्विचलितातथा॥ प्राजापत्येनशुध्येतेति॥ रजस्वलेएकभर्तृके
अमत्यामत्यावापरस्परस्पृष्टेसद्यःस्नानेनशुध्यतः॥ असपत्न्योस्तुसवर्णयोर्योनिगोत्रसंबंधयोरमत्यास्पर्शेनदैवस्नानमात्रम्॥
मत्यात्वेकउपवासःपरेद्युःपंचगव्यपानंच॥ असंबंधयोःसवर्णयोःस्पर्शेतुमत्याआशुद्धेरनशनम्॥ अमत्यातुस्नात्वातद्दिनोपवासः॥
च्छुद्धिः॥ तन्मध्येतुभुक्तौदिनसंख्याकोपवासाः॥ विप्रशूद्रयोरजस्वलयोःस्पर्शेविप्रायाःकृच्छ्रंशूद्रायाःपादः॥ शूद्रायाःनिष्कचतु-

र्थंशदानमित्यन्ये॥अकामतस्तुविप्रायायावच्छुद्धेरनशनम्॥शूद्रायाःस्नानमात्रं॥क्षत्रियवैश्ययोरेतत्कालेऽभावाच्छुद्धिर्निर्विचार्य
ते॥यदेवानुच्छिष्टयोःपरस्परस्पर्शेवातदेवोच्छिष्टत्वेद्विगुणंबोध्यं॥अधरोच्छिष्टेऊर्ध्वोच्छिष्टार्धम्॥चांडालाद्यंतावसायिपतितशवा-
दीनांमत्यास्पर्शेरजस्वलाआशुद्धेरभुंजानाशुध्यंतेप्रायश्चित्तंकुर्यात्॥तत्रप्रथमेन्हिस्पर्शेत्रिरात्रम्॥द्वितीयेद्विरात्रम्॥तृतीयेए
काहः॥चतुर्थेनक्तम्॥तत्रप्रथमदिनेयदिसाभुंक्तेनदाशुध्यंतेचांद्रम्॥द्वितीयादिदिनेषुभोजनेपादपादन्यूनंकल्प्यम्॥अमत्याचांडा
लादिस्पर्शेतुआशुद्धेरुपवासमात्रं॥अत्रप्रथमादिदिनभुक्तौप्रागुक्तत्रिरात्रादियोज्यम्॥सूतिकाशौंडिकादीनांश्वपाकसृगालवानररास
रोष्ट्रविड्वराहकाककुक्कुटादीनांउच्छिष्टशूद्रस्यचमत्यास्पर्शेतदादिकाहन्यभुंजानायाःशुध्यंतेप्रायश्चित्तम्॥तत्रप्रथमेहनिद्विरात्रमप्र
क्तिः द्वितीयेएकाहम्॥तृतीयेनक्तम्॥चतुर्थेएकभक्तम्॥अत्रप्रथमादिदिनेषुभुक्तौप्राजापत्यपादपादन्यूनानि॥अमत्यास्पर्शेतुआ
शुद्धेरभुक्त्यैवशुध्येत्॥भुक्तौप्राजापत्यपादादिन्यूनादिक्रमेण॥ ॥चांडालरजकरजस्वलासूतिकाश्वादिस्पृष्टैःसहमत्यास्पर्शेअ-
मेध्यादिमलोच्छिष्टादिस्पर्शेचतदादिकाहन्यभुंजानायाः शुध्यंतेप्रथमदिनेस्पर्शेउपवासः॥द्वितीयदिनेनक्तम्॥तृतीयेएकभक्त
म्॥परतःपंचगव्यम्॥प्रथमादिदिनेभुक्तौत्रिरात्रैकोपवासनक्तादि॥अमत्यातत्तत्स्पृष्टैःस्पर्शेअभुंजानाशुध्येत्॥भुक्तावनशनम
त्याम्नायाः॥उच्छिष्टायाः चांडालादिस्पृष्टस्पर्शेतदाद्यभुक्ताविरात्रादि॥तेषुभुक्तौउपवासमत्याम्नायाः॥उच्छिष्टायाः चांडाला
दिभिःसाक्षात्स्पर्शेतुप्रथमादिदिनेषुषट्चतुर्द्विरात्रंगोमूत्रयावकंचतुर्थदिनेस्पर्शेउपवासःसपत्नींरजस्वलांस्पृष्ट्वारजोदर्शनेस्ना

ज्ञानकृतत्वंच गांज्ञात्वा एतांहन्मीति कामनयाहननम् ॥ एतद्विहीनमज्ञानकृतत्वम् ॥ तद्ग्राहित्वंच कामनाभावेन तद्व्यापकप्रमादात्मकज्ञाना
भावेनवा ॥ एवंसर्वत्र बोध्यम् ॥ प्रायश्चित्तानंतरं पार्वणविधिना श्राद्धं कार्यं तच्च जीवत्पितृकेणापि ॥ किंतुपितुः पित्रादिभ्यएव ॥ गोचर्म
धारणाधिकं प्रायश्चित्तंच गोपतये गोमूल्यं प्रतिरूपगवांतरं दत्वा कार्यम् ॥ पत्रदाने त्विदंलेख्यं ॥ पूर्वदिने सशिखं वपनं कृत्वा परदिने घृतंप्रा
श्योपोष्य तत्परदिने स्नानादिकं विधाय व्रतं तत्प्रतिनिधिंवासं कल्प्यानुष्ठाय विप्रायय थोक्तां दक्षिणां दत्वा अच्छिद्रावधारणं कुर्यात् ॥ ततः
पार्वणविधिना श्राद्धं भोज्यदानंच कार्यम् यत्स्वामिकगोवधे यत्प्रायश्चित्तमुक्तं तत्स्वामिकगर्भिणीकपिलाबहुक्षीरादिकगुणकहोम-
धेन्वादिवधे तद्द्विगुणम् ॥ गर्भिण्यांच सचेतनगर्भयुतायामेवेदम् ॥ उत्पन्नमात्रदार्ढ्ययुताचेतनांगप्रत्यंगपूर्णगर्भयुतायास्तुक्रमे
णस्वपादं सपादद्वयं सपादत्रयं पूर्णद्विगुणंच गोघ्नव्रतम् ॥ लगुडादिघातेपि गोर्जीवने गर्भमात्रपाते पूर्वोक्तोत्पन्नादिक्रमेणैकपाद
मर्धपादं त्रिपादं पूर्णव्रतंच ॥ अतिवृद्धाति कृशातिबालातिरोगिणीनां वधे ज्ञानाज्ञानकृते पूर्वोक्तार्द्धं ॥ अतिवृद्धत्वं तृणादिच्छेदना-
सामर्थ्यम् ॥ अतिकृशत्वं दोहवहनायोग्यत्वं ॥ अतिबालत्वं द्विवर्षीयत्वम् ॥ एकवर्षत्रिवर्षयोर्वधे तु पूर्वोक्तक्रमेण पादेपादत्रयंच ॥ ए
कप्रयत्ननिष्पन्नानेकगोवधे तु प्रायश्चित्ते द्वैगुण्यम् ॥ एवं गृहदाहादिस्थलेपि ॥ क्रमकृते त्वनेकगोवधे प्रयत्नभेदेन पापभेदात् प्रतिगो
वधं यथोक्तप्रायश्चित्तावृत्तिः ॥ बहुभिरेकस्याहनने यत्र यावद्भिर्हतं तस्यैव पादं पादं प्रतिपुरुषं कार्यम् ॥ केचित्तु अज्ञानतः पादं पादं ॥
ज्ञानतस्त्वर्धमर्धमाहुः ॥ बहुभिरेकव्यापारेण द्वयोर्बहूनांच हनने प्रतिपुरुषं पादद्वयं पादत्रयंच कार्यम् ॥ मिताक्षरातु बहुभिरेकहिब-

द्वयवधेकामकृते पूर्णमेव पूर्वोक्तं पादद्विपादादिकमकामकृतवधपरमित्याह ॥ प्रयत्नभेदे तु प्रतिवधं प्रतिपुरुषं प्रायश्चित्तावृत्तिः ॥ द्वाभ्या
मेकस्याः द्वयोर्वा एकप्रयत्नेन वधे प्रत्येकं पूर्वमेव ॥ बहूनां वधे नूक्तरीत्या प्रत्येकं द्विगुणम् ॥ अत्यंतव्याधिपीडितमरणावस्थापन्नोन्म
नां धवर्षन्यून गोवधे पादमेव ॥ अधम शूद्रकैवर्तादिकस्वामिकं कहायनि द्विहायनि त्रिहायणी वधे क्रमेण प्राजापत्यार्धं सार्धप्राजा
पत्यं प्राजापत्यद्वयं चेति ॥ अज्ञानतोर्धमेतत् ॥ गर्भिण्यादौ द्विगुणम् ॥ अतिरोगे निकृशत्वादौ तदर्धम् ॥ अत्र यादक्षिणोक्ता सा प्रायश्चि-
न द्विगुणये द्विगुणा अर्धे अर्धा पादे पादरूपेत्येवं व्यवस्थावोध्या ॥ अग्निहोत्रिणो वेदपारगस्य होमधेनोः कपिलायाः गर्भिण्याः पुण्य
देशे पुण्यकाले च बुद्धिपूर्वकवधे तु वैश्यवधे वक्ष्यमाण त्रैवार्षिकव्रतम् ॥ एकशतं गावो वृषभश्चैको दक्षिणा ॥ एवमन्यान्यपि सहस्रगो
दक्षिणायुतानि गुरुप्रायश्चित्तानि ॥ एवं वधविद्वद्विषये योज्यानि ॥ ॥ अथ पंचविधत्वनिर्णयः ॥ ॥ चेतनांतरव्यापारव्य
वधानमंतरेण प्राणवियोगफलकव्यापाररूपवधनिष्पादकः कर्ता ॥ १॥ यस्त्वप्रवृत्तं पुरुषं वेतनादिना प्रवर्त्तयति प्रवृत्तं वा प्रोत्साहय
ति स प्रयोजकः ॥ २॥ वध्यस्य फलायनादिनिरोधकोनुग्राहकः ॥ ३॥ एतां हन्मीति वक्तुरनुमतिदाता निषेधक्षमोपि मौनालंबी वा
नुमंता ॥ ४॥ उपदेश्यस्य हंतुर्हेतुकोऽमत्या प्रसादको निमित्तम् ॥ ५॥ प्रयोजकादीनां क्रमेण पादपादहानिरिति शूलपाणिः ॥ अ
ष्टमभागहानिरिति भवदेवः ॥ पैठीनसिः ॥ हंतानुमंतोपदेष्टा च तथा संप्रतिपादकः ॥ प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥ आ
श्रयः शस्त्रदाता च भुक्तिदाता विकर्मिणाम् ॥ उपेक्षकः शक्तिमांश्च दोषवक्तानुमोदकः ॥ अकार्यकारिणस्त्वेषां प्रायश्चित्तं प्र

कल्पयेदिति ॥ एवंसर्वपापेषुयथासंभवंयोज्यम् ॥ ॥ अथरोधादौप्रायश्चित्तम् ॥ ॥ क्षीणायागोरक्षीणत्वक्रमात् ॥ रोधनेन
वधेयत्स्वामिकगोवधेअज्ञानतोयत्प्रायश्चित्तमुक्तंतस्यपादः ॥ तादृश्यास्तथाक्रमाद्बंधनेनवधेतस्यपादद्वयम् ॥ तथाक्रमात्ह
लशकटादावतिकालयोजनेनमरणेतत्पादत्रयं ॥ अतिदोहेप्येवं ॥ अंगुष्ठस्थूलहस्तत्रयप्रमाणपलाशदंडनिपातनेनतादृश्यास्तथा
क्रमाद्वधेसंपूर्णम् ॥ उक्तदंडाधिकदंडादिनावधेनाद्विगुणमितिकेचित् ॥ क्षीणत्वज्ञानेनतुज्ञानकृतवधविहितंतस्यपादाधिकम् ॥ रो
धश्चात्ररात्रौरक्षार्थंक्रियमाणरोधातिरिक्तआहारप्रचारनिर्गमरोधः ॥ बंधनंच दृढकुशकाशादिकरज्जुव्यतिरिक्तेनअयथाबंधनम
कालबंधनंच ॥ योजनंचहलशकटादावतिवाहादिना ॥ भवदेवस्तु वैश्यादिस्वामिकगोःक्षैण्यज्ञानेरोधादिनावधेक्रमेणचांद्राय
णपादपादद्वयपादत्रयपूर्णचांद्रायणानि ॥ अज्ञानेतुप्राजापत्यस्यैवपादादिकमित्याह ॥ शूलपाणिस्तु सर्वस्वामिकगोःक्षीणत्वं
ज्ञात्वाप्रवृत्तेन पुंसारोधादिनावधेचांद्रायणपादादिकं ॥ क्षीणत्वाज्ञानेतुप्राजापत्यस्यैवपादादिकमित्याह ॥ चांद्रायणेवृषभसहि
तागोर्दक्षिणा ॥ ताडनार्थमुद्यतंदृष्ट्वाभीत्याकूपादौनिपत्यमृतेप्राजापत्यम् ॥ ॥ अथास्थिभंगादिप्रायश्चित्तम् ॥ ॥ गवा
मस्थिभेदेलांगूलच्छेदेकर्णशृंगोत्पाटनेकटिभंगेचर्मनिर्मोचनेचषण्मासाभ्यंतरेमरणेपूर्णप्रायश्चित्तम् ॥ षण्मासोत्तरंमरणेनद
र्धं ॥ जीवनेचमासार्द्धम् ॥ गोमूत्रसहितयावकपानंसर्ववर्णानां ॥ एतच्चैकप्राजापत्यसमम् ॥ हलशकटयोर्विप्रेणवृषभवाहने
प्राजापत्यद्वयम् ॥ योषितोद्विगुणंसर्वेषां ॥ समुत्सृष्टगोवृषभयोर्येनकेनापिदोहनेवाहनेचचांद्रायणद्वयम् ॥ कपिलादोहनेविप्र

स्याप्येतदेव॥ उत्सृष्टवृषभगोवधेद्विजस्यकपिलागोवधोक्तंप्रायश्चित्तम्॥ शूद्रस्यतुविशेषः॥ वृषभादेरुत्सृष्टत्वेस्वत्वाभावेपिभूत
पूर्वस्वत्वमाश्रित्यंयत्स्वामिकवृषभादिवधकर्त्तुःप्रायश्चित्तमुक्तंतत्स्वामिकंतत्द्विगुणंबोध्यं॥ अंडनाशेलिंगच्छेदनेचमृततुल्य
प्रायश्चित्तम् तदनंतरंमरणेचद्विगुणम्॥ ॥अथपालननिमित्तवधे॥ ॥तत्राविभक्तानांभ्रातृणांमध्ये सर्वानुमत्याएके
नप्रायश्चित्ताचरणेसर्वेषांपापक्षयान्नपृथक्प्रायश्चित्ताचरणम्॥ तत्रशूद्रस्वामिनोरक्षणभावनिमित्तकवधेयत्किंचिद्दक्षिणा
दिकंकेवलंप्राजापत्यं॥ द्विजस्वामिनस्तुसशिखंमुंडितस्यत्रिसंध्यावगाहनशीलस्यपूर्वोक्तचर्मावृतस्यगोव्रजवासिनोदिवारा
त्रंतन्मध्येस्थितस्यप्राजापत्यम्॥ अन्येनब्राह्मणभोजनमनडुत्सहितागौश्चदक्षिणा॥ इतिकर्तव्यतासहितप्राजापत्याशक्तौ
धेनुद्वयंदक्षिणाप्रागुक्तैव॥ शूलपाण्यादयस्तुसर्वेषांकेवलंप्राजापत्यम्॥ तदशक्तौएकधेनुदक्षिणांतुप्रागुक्तेत्याहुः॥ उत्सृष्टवृष
भादिषुस्वत्वाभावादपालनान्मृतेष्वपिउत्स्रष्टुर्नदोषः॥ अपालनमृत्युश्चशीतानिलोद्बंधनशून्यागाराद्यपेक्षाजलादिमज्जनकूप
दिपतनसर्पविद्युद्धननश्वभ्रपातव्याघ्रादिभक्षणकृतः॥ एतच्चपालनासमर्पणे॥ तत्समर्पणेतुपालकस्यैवदोषः॥ परंतुयावत्का
लंपालकाधीनतातावदेव॥ अशक्तपालकसमर्पणेतुस्वामिनएवदोषः॥ एवमिक्षुतैलयंत्रार्थंनियुज्यसन्निधावीक्षणेदैवाद्धृदा
हगृहभंगाभ्यांगोमरणेघंटाभरणादिदोषेणगवांविपत्तौचार्धप्राजापत्यम्॥ यदिगोःशक्तिमनपेक्ष्यदत्तभारादिदोषेणमरणंत
दाप्राजापत्यम्॥ शक्तपालकस्यसन्निधिसत्वेकांतारदुर्गगृहदाहावटेषुलतापाशाद्यावृतस्यगोर्यदिमरणंतदाप्राजापत्यपादए

वेत्याहुः॥ तथात्रिहायनपर्यंतवत्सस्यारक्षणेपिपाद एव॥ गोमांसभक्षकाय गोविक्रये चांद्रायणं॥ यदि तस्मै पालकेन धेनवो वि
क्रियंते तेन दानत्तत्स्वामिकगोवधप्रायश्चित्तं प्राजापत्यादिकम्॥ पालकबहुत्वेतु पालकानामविभक्तानां सर्वेषामेकम्॥ विभक्तानां
तु पादंपादम्॥ बहूनांगवामपालननिमित्तवधे पालकस्य द्विगुणम्॥ तत्रापि बहुकर्तृत्वे प्रत्येकं द्विगुणम्॥ पालकस्य द्रव्याभावे
स्वामिना द्रव्यंदत्वा करणीयं॥ म्लेंच्छपालकत्वेतु स्वामिना कर्तव्यम्॥ ॥अथौषधाद्युपचारे॥ ॥दाहच्छेदशिराभेदप्रयो
गैरुपकुर्वतः॥ द्विजानांगोहितार्थंच प्रायश्चित्तंमृतो नहि॥ इदंचाज्ञानिन आदरेण यथावदुपचारे एव॥ शास्त्रस्यानादरेणायथाव
दुपचारेच॥ प्राजापत्यव्रतमंते धेनुर्दक्षिणा॥ भिषगपिविरुद्धौषधदानेनाकामतोप्येकगोवधे द्विगुणंगोवधप्रायश्चित्तं चरेदिति
मिताक्षरादौ॥ अतिदाहेप्येतदेवेति केचित्॥ एवंयंत्रणे गोचिकित्सार्थे गूढगर्भविमोचने औषधस्नेहाहारदाने स्वगवादिमृतौ न
प्रायश्चित्तम्॥ इदमपि स्वेच्छया गृह्यमाण एव॥ हठादधिकंदीयमानमाहारस्नेहादिकं मृतिहेतुश्चेत् पादकृच्छ्रः॥ एवंनगरग्राम
दाहेषु अबद्धानां मृतौ पालकस्य स्वामिनश्च न दोषः॥ बंधनेतु पादकृच्छ्रः॥ एवंव्याधियुक्तानां दंडाभिघातादिना मूर्छयाभिपतने
ऽनंतरंगमनग्रासतोयपानैस्तदानींतनताडनस्य मरणहेतुत्वाभावनिश्चये पूर्वव्याधिनष्टानां न प्रायश्चित्तम्॥ यदि पूर्वव्याधि
युतापि महारजनितपीडयैव ग्रासादिकं न कृत्वैव म्रियते तदार्धपादं वा प्रायश्चित्तं भवत्येव॥ शालादौ गवांमशकादिनिवृत्त्यर्थं धू
मायाग्निं प्रज्वाल्य पालकादेस्तत्रास्थितौ दैवात्तदग्निना बंधनरहितस्य गवादेर्मरणे दोषाभावः॥ तत्रानवस्थितौ बंधने वा गा

दृढकच्छुः त्रिशूलादिस्थिरतरचिन्हकरणेन गोप्यादिवाहनादिभिश्चर्मनिर्मोचने दोषाभावः॥ मत्तागौर्यदिनिवारयंतं पालकमतिक्रम्य
गर्तकूपादौ पतनादिना म्रियते न दापिनदोषः॥ शंकारहितेवनादौ सति सन्निधौ पालके ऽकस्मादागतव्याघ्रादिना मरणेपि न दोषः॥
पालकस्य तत्रासत्वेतु दोष एव॥ एवं राजसैन्यादिभिः शरादिभिर्ग्रामघातराष्ट्रघातवेश्मभंगातिवृष्टिव्याध्युपद्रववृक्षादिपतना
दिभिरुपद्रुतानाम बद्धानां पालकसत्वे मरणे दोषो न॥ पालकासत्वे बंधनेच दोषादुक्तपादः प्रायश्चित्तम्॥ गोहरणेतु अश्वगोभूमि
कन्याश्च हृत्वा चांद्रायणं चरेत्॥ क्षुद्रान्पशून्समाहृत्य प्राजापत्यं समाचरेत्॥ इति जाबाल्युक्तं प्रायश्चित्तम्॥ गोवधोक्तं सर्वं वृषव
धेपि॥ स्त्रीत्वस्याविवक्षितत्वात्॥ दानंतु स्त्रीगवीनामेव॥ विधेयगतत्वेन स्त्रीत्वस्य विवक्षितत्वात् इति मयूखे॥ अत्र वपने विशे
षः॥ पुंसां गोवधोक्तप्रायश्चित्तपादे कंठादधस्थितांगलोम्नां वपनम्॥ अर्धप्रायश्चित्ते श्मश्रूणामंगरोम्णां च शिरःकेशवर्जम्॥ त्रिपा
देंगरोमश्मश्रूशिरःकेशानां शिखावर्जम्॥ पूर्णप्रायश्चित्ते सशिखं वपनम्॥ स्त्रीणां तु सधवानां वपनं न क्वापि प्रायश्चित्ते॥ किंतु स
र्वान् केशान्समुद्धृत्य द्व्यंगुलछेदनमात्रं कार्यमिति स्मृत्यर्थसारे॥ ॥ इति गोवधप्रायश्चित्तनिर्णयः॥ ॥ अथ व्रात्ये प्राय-
श्चित्तनिर्णयः॥ ॥ व्रात्यश्च पंचदशैकविंशतिवर्षरूपे षोडशद्वाविंशतिचतुर्विंशतिवर्षरूपे वा ब्राम्हणक्षत्रियवैश्योपनयनका
लेउपनयनाभावात्॥ तत्र यस्योपनयनेन्नाद्यभावेन तत्कालातिक्रमस्तस्य साधारणोक्तचांद्रायणादिचतुष्टयान्यतमं शक्त्य-
नुसारेण कृत्वोपनयनं कार्यम्॥ अनापदि यस्य तदतिक्रमस्तस्य मानवं त्रैमासिकम्॥ तदसमर्थस्य सशिखवपनपूर्वकमेव विंश

तिरात्रंप्रसृतिमात्रंयावकपानंपंचविप्रभोजनंच॥यस्यषोडशादिवर्षादूर्ध्वमप्यनापदिबुध्यातदतिक्रमस्तेनम सहृयंयावकपानं
मासंपयोमासार्द्धमामिक्षाष्टरात्रंघृतंषड्रात्रमयाचितंत्रिरात्रमभक्षता अहोरात्रमुपवासइत्युद्दालकव्रतम्कार्यम्॥यस्यपितृपि
तामहावप्यनुपनीतौतस्यसंवत्सरंभैक्ष्याशनगुरुशुश्रूषादिरूपब्रह्मचर्यव्रतम्॥ततउपनयनम्॥ततोयावतांपुरुषाणांउपनयनंन
वत्संख्याकवर्षपर्यंतंप्रायश्चित्तार्थंयदंतियच्चदूरकइत्यादिसमपावमानीभिः येनदेवाःपवित्रेणेतियज्ञपवित्राख्येनकुंथानश्चित्र
आसुवइतिसामपवित्राख्येनहंसःशुचिषदित्यनेनेत्येतैर्मंत्रैःस्नानंततोध्याप्यता॥यस्यतुप्रपितामहादीनामुपनयनंनानुस्मर्यते
॥तस्यद्वादशवार्षिकंपूर्वोक्तंब्रह्मचर्यम्॥ ॥ततःउपनयनं॥ ॥ततःपुरुषसंख्याकाब्दपर्यंतमुक्तमंत्रैःस्नानम्॥तदनंतरमप्यस्य
गार्हस्थ्यमात्रोपदेशोनाध्यापनंनापिव्यवहारः॥तज्जन्येतुस्वकालातिक्रमप्रायश्चित्तमात्रंकृत्वायथाकालमष्टमादिवर्षसंस्कारः
॥अस्याध्ययनादिकंभवति॥ ॥इतिव्रात्यताप्रायश्चित्तं॥ ॥अथस्तेयप्रायश्चित्तम् स्तेयंचौर्यम्॥तच्चविप्रस्वामिकस्वर्ण-
तत्समव्यतिरिक्तमेवोपपातकं॥स्वर्णादिचौर्यस्यमहापापत्वात्।तत्रविप्रस्यविप्रस्वामिकंदशकुंभपरिमितंध्यानंवानसारिमितंतंडुलाद्यन्नंवात
तुल्यमूल्यंवाताम्ररजतादिकंवा अमत्यापहर्तुस्त्रैमासिकंगोवधव्रतम्॥गोचर्मगोसेवादितद्विशेषरहितंकार्यम्॥मत्याभ्यासे
वाकृच्छ्राब्दम्॥क्षत्रियादेर्हर्तुःपादपादह्रासः क्षत्रियस्वस्यतावताकामतोपहारेषाण्मासिकम्॥वैश्यस्वेत्रैमासिकम्॥शूद्रस्वे
चांद्रम्॥ ॥कुंभपरिमाणंतु॥ ॥अष्टमुष्टिर्भवेत्किंचित्किंचिदष्टौचपुष्कलम्॥पुष्कलानिचचत्वारिआढकःपरिकीर्तितः॥

आढकानि च चत्वारि द्रोण इत्यभिधीयते ॥ दश द्रोणा भवेत् खारी कुंभोपि द्रोणविंशतिरिति ॥ स्मृत्यर्थसारे तु कुंभः पंच सहस्रपल
परिमाण इति ॥ सार्द्धशतद्वयपणमूल्य क्षत्रियस्वामिक गृहक्षेत्रभूमिवापीकूपतडागादि पानीयरसानां तत्स्वामिकस्य निक्षेपस्य
तावन्मूल्य रजतवस्त्ररत्नादेश्च नारीनराश्वानां चापहारे चांद्रम्  वैश्यशूद्रस्वेताहशेताहशे पूर्वोक्तक्रमेण चांद्रार्धतत्पादौ ॥ विप्रस्ते
ताहशे स्वर्णस्तेयसमम् ॥ तेन षडब्दम् ॥ स्वर्णस्तेयसमवदिति स्मृत्यर्थसारे ॥ अत्र षडब्दं न्यूनं कल्प्यम् ॥ त्रपुसीसलोहादिद्रव्या
णामल्पप्रयोजनानां सार्द्धशतद्वयपणपंचदशांशमितानां हर्त्तुः सांतपनम् ॥ एकवारभोजनपर्याप्तानां भक्ष्यभोज्यपानादीना
मपहारे तत्सममूल्यकानां यानशय्यासनोपानहपुष्पफलमूलपर्णमृद्भांडमधुमांसौषधस्रगंधद्रव्याणामपहारे पंचगव्येनाहो
रात्रं द्विवारभोजनपर्याप्तनदपहारे त्रिरात्रं तत् ॥ त्रिरात्रभोजनपर्याप्ताहारमूल्येप्येतदेव ॥ तृणकाष्ठद्रुमशुष्कान्नगुडतैलच
र्मणां त्रिभोजनमूल्यानां हरणेप्येतदिति स्मृत्यर्थसारे द्वादशाहारपर्याप्त ब्राह्मणस्वामिकमणिमुक्ताप्रवालताम्ररजतशंखशु
क्तिलोहकांस्योपलापहारे द्वादशाहं कणान्नता त्रिभोजनपर्याप्ताहारमूल्य कार्पासकीटजजीर्णाहिशफैकशफपशुरज्जुपक्षि
णां अपहारे एकउपवासः ॥ त्र्यहं पयःपानं वा गजाश्वभूमिकन्याहरणे षडुपवासाः ॥ अभ्यासे चांद्रायणम् ॥ षण्मासं गोमूत्रयाव
काहारो वा ॥ एवं पुस्तकादिचौर्येष्वपि ह्रियमाणाल्पत्वबहुत्वाभ्यां प्रायश्चित्तादि कल्प्यम् ॥ देवद्रव्यापहारे ब्दम् ॥ यस्य वर्ण
स्य वृत्तिं यो हरेत्स गद्वर्णवधप्रायश्चित्तं पादोनं कुर्यात् ॥ अत्र सर्वत्र सकृदभ्यासद्रव्याल्पत्वमहत्वे देशकालस्वाम्यपहर्तृगुणवैगु-

ण्याद्यपेक्ष्यप्रायश्चित्तगुरुलघुताज्ञेया॥ इदंचप्रायश्चित्तमपहृतद्रव्यस्वामिनेतत्द्रव्यंदत्वैवकार्यंसतिस्वामिनि॥ वैदिकाग्निभ्यः
काष्ठंगवेतृणंहर्तुः पांथद्विजस्येक्षुद्वयंमूलकद्वयंचकणकव्रीहिगोधूमयवमुद्गमाषाणांमुष्टिंक्षेत्रादूरतःस्वाम्यनिषिद्धस्यस्तेय
दोषोनेतिमयूखे॥ ॥इतिस्तेयप्रायश्चित्तानि॥ ॥अथऋणानपाकरणेप्रायश्चित्तम्॥ ॥यज्ञाध्ययनप्रजारूपाणांदे
वर्षिपितृऋणानांअनपाकरणंआत्मपितृपितामहादिभिरुत्तमर्णात्गृहीतानांधनानांअदानंचतत्॥तत्रयज्ञब्रह्मचर्याद्यकरणरूप
देवऋष्यादिऋणेउपपातकसामान्योक्तचांद्रादिष्वेकंशक्त्याकार्यम्॥सर्वथातदसंभवेवर्षांतेवैश्वानरेष्टिःकार्या॥साचस-
त्याधानादिनातदधिकारेनदकरणेप्रतिवर्षंकार्या॥उत्तमर्णऋणादानेतुकालविलंबादिप्रयुक्तमेतच्चांद्राद्यन्यतमंप्रायश्चित्त
उत्तमर्णायतद्धनंदत्वाकार्यंसतिधने॥ ॥अथानाहिताग्नितप्रायश्चित्तम्॥ ॥साचसत्यधिकारेग्न्याधानाभावःतत्रव
र्षापूर्तौप्रतिमासंत्रिरात्रम्॥ततःप्रत्यब्दंचांद्रादिष्वेकंशक्त्याकार्यम्॥अनापदितुत्रैमासिकम्॥पितर्यनग्नावाधातुरयष्टरि
यष्टुश्चस्कृतस्यव्रात्यपशुकार्यः॥औपासनाग्न्यसंधानेआवर्षंप्रतिमासंउपवासः॥अब्देचांद्रादिष्वेकं॥यद्वाप्रथमवर्षेकृच्छ्रः
॥द्वितीयेतिकृच्छ्रः॥तृतीयेकृच्छ्रातिकृच्छ्रौ॥ततश्चांद्रम्॥मयूखेइदंज्येष्ठस्यैवतच्चदायकालदायाद्यकालगृहपतिमरणरूप
कालत्रयातिक्रमे॥कनिष्ठस्यतुसतिज्येष्ठेऔपासनाग्निरहितेअनधिकारादेवनप्रायश्चित्तं॥एवंपितरिनाद्दृशोस्कृतस्यापि॥
॥अथापण्यविक्रयेप्रायश्चित्तम्॥ ॥अपण्यस्यलवणादेर्विक्रयोहिंसः॥तत्रस्कराविक्रयेसौम्यकृच्छ्रचतुष्टयम्॥गु

डानिस्पुष्पफलमूलपक्वान्नविक्रये सौम्यकृच्छ्रः॥ मत्या प्राजापत्यम्॥ लाक्षालवणमधुमांसतैलक्षीरदधितक्रघृतगंधचर्मरक्तव
स्त्रतिलाद्यन्यतमविक्रये चांद्रम्॥ मत्याभ्यासे तत्त्रयम्॥ अमत्या सकृदुपवासः॥ पयःपायसापूपेक्षुरसगुडखंडादीनां स्नेहप-
क्वानां च विक्रये पराकः॥ पूगमंजिष्ठाखर्जूरद्राक्षाणां प्राजापत्यम्॥ पनसस्य त्रिदिनम्॥ कदलीनीरनारीकेलजंबीरबीजपूरकनारंगा
णां पादकृच्छ्रः॥ कर्पूरादेरर्धकृच्छ्रः॥ कस्तूरिकादीनां कृच्छ्रः॥ ऊर्णाकेशकेसरिणां भूधेन्वनडुहाश्मशस्त्राणां च विक्रये चांद्रम्॥ अभक्ष्य
मांसतदस्थिशृंगनखशुक्तिहिंगुगुग्गुलुसर्वरसहरितालमनःशिलांजनलवणक्षारमणिमुक्ताप्रवालवैणववेणुमृन्मयानां तप्तकृच्छ्रः
॥ अमत्या सकृदुपवासः॥ विषशस्त्रगोनीलीकौशेयविक्रये प्राजापत्यम्॥ कृष्णपीतादिवस्त्रकृष्णाजिनकृष्णवस्त्रविक्रये त्र्यहम्
॥ गजविक्रये चांद्रम्॥ खरोष्ट्राश्वनरकरभाणां विक्रये पराकः॥ नारीविक्रये चांद्रम्॥ पुरुषविक्रये तद्द्वयम्॥ कन्यापुत्रविक्रये त-
द्द्वयं द्विगुणम्॥ एकाहाह्रदविक्रये चांद्रम्॥ अंगानां विक्रये पराकः॥ स्मृतीनां कृच्छ्रम्॥ इतिहासपुराणानां सांतपनम्॥ रहस्यपं
चरात्राणां कृच्छ्रः॥ इतरविद्यामात्रस्य पादकृच्छ्रम्॥ सोमविक्रये उक्तप्राण्यतिरिक्तप्राणिविक्रये च तप्तकृच्छ्रः पुनरुपनयनं च॥
तुषकपालभस्मरोमपिण्याकानां प्राजापत्यम् मधूच्छिष्टत्रपुसीसकृष्णलोहोदुंबरखड्गपात्रगोधूमविक्रये महासांतपनम्॥
आगमनडागोदपानपुष्करिणीसुकृतविक्रये त्रिषवणस्नायी अधःशायी चतुर्थकालाहारो गायत्रीं दशसहस्रं जपन् संवत्सरेण शु-
ध्येत्॥ हीनमानहीनोन्मानाभ्यां विक्रयेऽन्यमिश्रितान्यवस्तुविक्रये चैवम्॥ तत्र मानं प्रस्थादि॥ उन्मानं तुलादि॥ विषमतुलादि

धारणेऽर्धकृच्छ्रः॥ निगडादिविक्रये प्राजापत्यम्॥ प्रतिश्रयोद्यानसभाप्रपादिविक्रयेण तप्तकृच्छ्रः॥ अत्र सर्वत्र दंडशास्त्रपर्यालो
चनेन प्रायश्चित्तन्यूनाधिक्यं योज्यम्॥ तिलतैलदधिक्षौद्रलवणद्राक्षामद्यमांसपक्वान्नस्त्रीपुरुषहस्त्यश्वगोवृषभगंधरस
क्षौमकृष्णाजिनसोमनीलीविक्रयात्सद्यः पतति विप्रः॥ प्रायश्चित्तं त्वकामकृते॥ एतत्सर्वमापदि वैश्यवृत्त्या जीवतो विप्रस्यैव॥ अ
नापदि तु वैश्यभिन्नानां सर्वेषामेव॥ शूलपाणिस्तु॥ आपदि शूद्रस्यैव दोषाभावः॥ क्षत्रियस्यापि भवत्येव प्रायश्चित्तमित्याह॥
शूद्रस्यापि यद्यपि मधुचर्मलाक्षासुरामांसानां विक्रये दोष एव॥ तिलगोधूमादीनां तु स्वोत्पन्नानां विक्रय एव दोषः॥ कृष्युत्पादितानां वि
क्रये तु नेति बोध्यम्॥ इदं च प्रायश्चित्तं जातं तत्तद्विक्रयार्जितधनोत्सर्गपूर्वकं कार्यमनापदि॥ ॥इत्यपण्यविक्रये प्रायश्चित्तम्॥

॥अथ परिवेदने प्रायश्चित्तम्॥ ॥ अकृतविवाहोऽग्रजोऽनुजेन प्रागात्मनो विवाहं कुर्वता तिरस्कृतः स परिवित्तिः स च प्राजापत्य
मृच्चत्वारिंशकं चरेत्। यस्मात् पूर्वं परिणीतां तेन दत्तामुद्वहेत्॥ तस्यै वहि सा भार्या नानुजस्य॥ अशास्त्रीयत्वात्तद्विवाहस्य॥ अनुजस्तु
क्रमेण विवाहजन्यदोषवान् परिविदानः परिवेत्ता चोच्यते॥ अयमसत्या चेत्तदा चान्द्रादि पृथक् कृत्वा तां ज्येष्ठाय दत्त्वा पुनरन्यामुद्वहे
त्॥ यद्वा तामेव ब्रह्मचर्याहृतभैक्षवत् गुरुपरिभवपरिहारार्थं निवेद्य तेनानुज्ञातां पुनस्तामुद्वहेत्॥ इदमेव युक्तम्॥ मत्या
चेत् त्रैमासिकं॥ अकामतश्चेत्कृच्छ्रातिकृच्छ्रौ कृत्वैव कुर्यात्॥ इदं कन्यापित्रादिदत्तोद्वाहे देशान्तरस्थिते ज्येष्ठे कृतविवाहो सा
विति नाप्नोति मतः परिवित्तुः॥ कन्यापित्राद्यपरिज्ञाने तत्पित्रादिभिरदत्तां बलात्कारादिना कामतो ज्ञात्वा चोद्वोढुरब्दं प्राजाप

त्यादि प्रायश्चित्तपूर्वकं पूर्वोक्तम्॥ परिवेत्तुरब्दविषये परिवित्तस्य ज्येष्ठस्य द्वौ कृच्छ्रौ परिवेदनीयायाः कृच्छ्रः पित्रादेर्दातुः कृच्छ्रा
तिकृच्छ्रौ॥ परिकर्ता तद्याजकस्तस्य चांद्रायणम्॥ इदं निर्गुणे ज्येष्ठे॥ गुणवति ज्येष्ठे बुद्धिपूर्वकपरिवेदने परिवेत्रादयः परिक
र्त्रंताः सर्वे पतिताः संवत्सरप्राजापत्यैः शुद्ध्येयुः॥ दत्तकादीनां तु नायं दोषः॥ भिन्नोदरे च पितृव्यतनये तथा॥ दाराग्निहोत्रसं
योगे न दोषः परिवेदने इति गौतमस्मरणात्॥ भिन्नोदर इति सापत्नभ्रातृविषयम्॥ दत्ते चेति जनककुले ज्येष्ठभ्रातृसत्वे
ऽपि न दत्तकस्य विवाहादौ परिवेत्तृत्वं नापि ज्येष्ठस्य परिवित्तित्वमित्यर्थः॥ पितृव्यतनये इति देवरेणोत्पादितस्य भ्रातुः क्षेत्रज
पुत्रस्य विवाहादौ देवरपुत्रादेः परिवेत्तृत्वादिकं नेत्यर्थः॥ एवं ज्येष्ठायामनूढायां या कनिष्ठा विवाहिता साग्रेदिधिषुः ज्येष्ठा तु
दिधिषुः॥ तत्राग्रेदिधिषुपतिः कृच्छ्रं कृत्वा पुनस्तामेवोद्वहेत्॥ दिधिषुपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा कनीयस्याः पत्यै तां निवे
द्य तस्मै नत्वा तेनानुज्ञानस्तां पुनरुद्वाहयेत्॥ एवं कन्ययोर्योज्यम्॥ ज्ञानकामकारबलात्कारादिविषये पूर्वोक्तं संवत्सरादि
कं व्यवस्थया योज्यम्॥ ॥ अथानाहिताग्निताया प्रायश्चित्तं॥ ॥ अनाहिताग्नौ ज्येष्ठे तु कनीयानादधीत चेत्॥ पर्या
धाता कनिष्ठः स्यात् ज्येष्ठः पर्याहितः स्मृतः॥ तयोः संवत्सरव्रतम्॥ इदं ज्ञात्वा कामतः करणे॥ अन्यथा मागवद्योज्यम्॥ क्लीबदु
षत्नीपतिविरक्तसंन्यस्तातिविरोगिजडमूकगरदबधिरकुब्जवामनपंगुवृद्धतस्करविवाहानिच्छुशूद्रतुल्यमृतभार्याणां परि
वेदने दोषो न॥ एवं धने कृष्यादौ वेश्यायां वासक्त्यादाराग्निहोत्रानिच्छुपरिवेदनेऽपि॥ धनधर्मविद्यार्जनार्थं देशांतरस्थे ज्येष्ठे-

द्वादशवर्षप्रतीक्षा ॥ कार्यांतरार्थं देशांतरस्येदशवर्षं ॥ ॥इतिपरिवेदनप्रायश्चित्तम् ॥ ॥अथभृतकाध्ययनादौप्रायश्चित्तम् ॥
पणपूर्वकाध्यापकादध्ययनग्रहणंभृतकाध्ययनम् ॥ पणपूर्वकमध्यापनंचभृतकाध्यापनम् ॥ तत्कर्तारोपयसाब्राह्मींसुवर्चलां
त्रीन्पक्षान्नियतंपिबेतां ॥ अनापदिशक्त्याद्यपेक्षयाचांद्रादिष्वेकं ॥ अनुप्रयोगप्रदानेप्येवं ॥ उत्कर्षहेतोरधीयानस्यांकिंपठसिना
शितंत्वयेत्येवं ॥ पर्यनुयोगोनुप्रयोगदानं अनुप्रयोगप्रदाताभ्यासेपातित्यमाहुः ॥ इतिभृतकाध्ययनादिप्रायश्चित्तम् ॥ ॥अथ
पारदार्येप्रायश्चित्तम् ॥ ॥ पारदार्यंचगुरुतल्पंतदातिदेशिकतत्समव्यतिरिक्तपरस्त्रीगमनरूपम् ॥ पुरुषांतराव्यभिचा-
रितांजातिमात्रविप्रांकृतौविप्रोगत्वापूर्वोक्तंवार्षिकब्रह्मचर्यव्रतम् ॥ धर्माधिकर्मशीलत्वादिगुणशालिनींतादृशींगंतुर्विप्र-
स्यद्विवार्षिकंप्रायश्चित्तम् ॥ श्रोत्रियपत्न्यांतादृश्यांत्रिवार्षिकंनन् ॥ ताभिर्यदिद्रव्यंदत्तंभवेत्तर्हितत्संत्यज्यप्रायश्चित्तम् ॥ द्वित्रि
चतुर्वारगमनेक्रमेणाद्वित्रिचतुर्गुणं ॥ अग्रेचपातित्यम् ॥ एवंद्वितीयतृतीयादिगमनेपि ॥ शूलपाणिमिताक्षरादयस्तु ॥ एकस्यामे
वद्वित्रिवारगमनेपूर्वोक्तमेवपादहान्येतिप्रोचुः ॥ क्षत्रियादीनांस्वस्ववर्णास्वगमनेपादहानिः ॥ विप्रस्यक्षत्रियादिस्त्रीषुद्विवा-
र्षिकत्रिवार्षिकषाण्मासिकानिगुणवतीषु ॥ शूद्रस्यपरकीयायांगुणवत्यांशूद्रांगंतुः षाण्मासिकं ॥ अकामतः सर्वत्रैनदर्धम् ॥ स्व
भर्तृव्यतिरिक्तसवर्णैकपुरुषगामिन्यांगंतुः पूर्वोक्तमेवपादहान्याकार्यम् ॥ पुरुषद्वयगामिन्यांद्विपादहानिः ॥ पुरुषत्रयगामिन्यां
त्रिपादहानिः ॥ पुरुषचतुष्टयगामिन्यांस्वैरिणीसंज्ञकायांविप्रायांगंतुस्त्र्यहोपवासपूर्वकंघृतपात्रदानम् ॥ तादृश्यांक्षत्रिया-

यांउपवासत्रयपूर्वकमादकयवदानम्॥ वैश्यायांगंतावतुर्थकालाहारोविप्रान्भोजयेत्॥ शूद्रायांगंतुःसचैलस्नानपूर्वकंउदकुंभ-
दानम्॥ पंचमादिगामिन्यांबंधकीसंज्ञायांअष्टमुष्टियवदानम्॥ ताहृश्यांशूद्रायांविप्रस्योदकुंभदानम्॥ क्षत्रियायांधेनुदानम्॥
वैश्यायांवस्त्रदानम्॥ अभ्यासेप्रायश्चित्तावृत्तिः॥ गौडास्तुविप्रादेःक्षत्रियादिगमनस्यैवाधार्धादिहानिमाहुः॥ अनृतौजातिमा-
त्रविप्रांविप्रांगत्वास्नानवंत्रैमासिकंकुर्यात्॥ इदृशक्षत्रियादिस्त्रीषुक्रमेणद्वैमासिकचांद्रायणमासिकानि॥ क्षत्रियादीनांस्वस्व
वर्णास्वनृतौगमनेद्वैमासिकान्येव॥ आस्कृगर्भोत्सत्तौतुतत्तद्विषयेसर्वत्रोक्तमेवद्विगुणंकार्यम्॥ शूद्रायांगर्भोत्सत्तौतुत्रीणिवर्षा-
णिचतुर्थकालेनक्तंभुंजीत॥ विप्रस्यानिच्छंतीषुविप्रादिस्त्रीषुगंतुरनुक्रमेणगोघ्नत्रैमासिकद्वैमासिकचांद्रमासिकानि॥ गोभिन्ना
स्कृतिर्यग्योनिषुमाहिषीगर्दभादिषुगमनेसचैलस्नानंगोभ्यस्तृणभारदानंच॥ एकउपवासोवा॥कामतोभ्यासेकृच्छ्रपादम्॥अ-
त्यंताभ्यासेप्राजापत्यम्॥ शुनीगमनाभ्यासेअतिकृच्छ्रः॥ गविसकृद्गमनेउपवासत्रयपूर्वकंगोदानम्॥ कामतस्तुत्रैमासिकंगोघ्न
व्रतम्॥ कामतोभ्यासेप्राजापत्यंत्रैमासिकंच॥कामतोत्यंताभ्यासेसंवत्सरव्रतम्॥ आजन्मात्यंताभ्यासेगुरुतल्पसमंवजकच
र्मकारबुरुडकैवर्तमेदभिल्लाःसप्तांतेवसायिनस्तेषांस्त्रीषुव्याधशैलूषनटवेणुजीविकापालकम्लेच्छादिस्त्रीषुचविप्रस्यचका
मतःसकृद्गमनेचांद्रद्वयम्॥ अमत्यापराकश्चांद्रंवा॥ वैनःसेकान्प्राकूनिवृत्तौकार्यम्॥ एनदभ्यासेतुकायावृत्तिः॥आस्वेवका
मतोभ्यासेकृच्छ्राब्दम्॥ अज्ञानात्तथाभ्यासेचांद्रद्वयं॥ गर्भोत्सत्तौत्रैवार्षिकं॥ अज्ञानतआकृचतुर्विंशतिवारगमनात्सान्तत्यं॥-

ज्ञानतस्तदर्धादितिगौडाः ॥ संवत्सरादर्वाक्ज्ञानतोद्वादशधागमनादज्ञानतश्चतुर्विंशतिवारंगमनाभ्यासेचद्वौमासौभैक्ष्यभुक्द्वौ
मासौगोमूत्रयावकभुक्द्वौमासौपंचगव्याशी ॥ एवंषण्मासाच्छुध्यति ॥ अंत्यजवत्शौंडिकादिस्त्रीषुयोज्यम् ॥ अमत्यासकृद्दृस्य-
माणाच्चांडालादिस्त्रीषुगमनेषडब्दं ॥ गर्भोत्पत्तौद्वादशवार्षिकं ॥ ज्ञानतोऽभ्यासेवाग्निप्रवेशादिनामरणमेव ॥ क्षत्रियादीनांपादहा
निः ॥ ज्ञानेतुसर्वेषांमरणमेव ॥ अनुपनेतृभ्रातृजायायांमत्यासकृद्गमनेचांद्रम् ॥ मत्याक्रियासिद्धेः प्राक्निवृत्तौचांद्रम् ॥ मत्या-
क्रियासिद्धिपर्यंतंसकृद्गमनेऽमत्याभ्यासेचसंवत्सरंविप्रकुलेभैक्ष्यं ॥ मत्याभ्यासेतुगुरुतल्पसमं ॥ एतदेवानुपनेतृपितृव्यमातुलजा
ययोः विधवासुपरस्त्रीषुगमनेकृच्छ्राधिकंतत्तत्पूर्वोक्तंप्रायश्चित्तम् ॥ आसुरजस्वलासुगमनेप्रकीर्णकप्रकरणोक्तैरजस्वलाप्राय
श्चित्तैःसहतेषांसमुच्चयः ॥ तत्राप्यधिकेनन्यूनस्यप्रसंगात्सिद्धिः ॥ साम्यंतुतंत्रं ॥ यत्तुरजस्वलागमनमनुपातकमितितत्तादृश्या
श्रोत्रियपत्न्यांकामतोऽभ्यासेबोध्यम् ॥ ॥ अथस्त्रीणांप्रायश्चित्तम् ॥ ॥ यत्पुंसः पारदार्येषुतच्चैनांचारयेद्व्रतमिति ॥ स्त्री
णामर्धइतितुस्त्रीपुंससाधारणव्रतोपदेशविषयं ॥ इदंचस्त्रीणांसमानेषुउत्तमेषुवावर्णेषुइच्छापूर्वकव्यभिचारएव ॥ अनिच्छं
त्यास्तुमलिनायाःअधःशयानायाः पिंडमात्रोपजीविन्यागृहेभर्त्रागुप्तमवरुद्धायाः कृच्छ्रंपराकोवाशक्त्यपेक्षया ॥ अभ्यासेचां-
द्रम् ॥ अकामतोब्राह्मण्यावैश्यक्षत्रियगमनेमासंतदर्धंचक्रमेणगोमूत्रयावकपानं ॥ ज्ञानतस्तुसकृच्छ्रंचांद्रद्वयम् ॥ सकृच्छ्
चांद्रमेकंचांद्रंचक्रमेण ॥ अनिच्छंत्याःस्वपतिभ्रांतिमत्यावाशूद्रगमनेरेतःसेकात्प्राक्निवृत्तौसकृच्छ्रंचांद्रम् ॥ रेतःसेकेस

कृच्छ्रं चांद्रत्रयं ॥ बुद्धिपूर्वकंगर्भपर्यंतंक्षत्रियवैश्यगमनाभ्यासेऽनिच्छयाक्षत्रियवैश्यगर्भप्रसवेचकृतेचिन्हायानिर्वासनम् ॥-
शूद्रविषयेतुकामतः संभवेगर्भानुपत्तावपिअनिच्छयोत्पन्नगर्भस्रावेपिचतथानिर्वासनम् ॥ तादृक्क्षत्रियायावैश्यगमनेसकृ-
च्छ्रंचांद्रायणं ॥ शूद्रसंगमेसकृच्छ्रंचांद्रद्वयम् ॥ वैश्यायास्तादृश्याः शूद्रसंगमेसकृच्छ्रंचांद्रम् ॥ शूद्रायाः शूद्रगमनेप्राजापत्यम् ॥
अज्ञानतः क्षत्रियायाः विप्रक्षत्रवैश्यगमनेषुक्रमेणार्द्धकायकायातिकृच्छ्राणि ॥ वैश्यायाविप्रक्षत्रियवैश्येषुगमनेकृच्छ्रपादकृ-
च्छ्रार्द्धकायानि ॥ शूद्रायाविप्रक्षत्रियवैश्येषुअहोरात्रत्रिरात्रार्द्धकृच्छ्राणि ॥ विप्रायागर्भोत्पत्तौतत्प्रसवेचविप्रगर्भेपराकः ॥ क्षत्र
गर्भेचांद्रं ॥ वैश्यगर्भेसंपराकंचांद्रम् ॥ इदमकामतः ॥ कामतश्चेद्द्विगुणम् ॥ सर्वत्रप्रागुक्तेनसमुच्चयइत्यूत्ह्यः ॥ यदाशूद्रगर्भ
प्रसूतेतदात्यागःपतितत्वात् ॥ केचित्तुप्रायाः शूद्रगर्भस्रावेपातेचचांद्रत्रयम् ॥ कामतोद्विगुणमित्याहुः ॥ एवंक्षत्रियवैश्यस्त्र्
योर्विप्रादिगर्भेपादपादपादन्यूनम् ॥ यदातास्हितगर्भाएवव्यभिचरंतितदागर्भबाधशंकयादशमासोत्तरप्रसवेसनिप्राय
श्चित्तमाचरेयुः ॥ गर्भस्यतुनदोषः ॥ तच्चमासंयावकपानं ॥ यदातोध्यत्यात्स्त्रियः प्रायश्चित्तंनेच्छंतितदातासांनासाकर्णा
दिकर्तनं ॥ यदाविप्रस्त्रीप्रागुक्तरजकादीनकामतोगच्छंतितदाचांद्रत्रयम् ॥ चांडालाद्यंतेवसायिगमनेतुचांद्रचतुष्टयम् ॥-
मत्याद्विगुणम् ॥ रेतःसेकात्प्राक्निवृत्तौचांद्रमेव ॥ गर्भोत्पत्त्यनंतरंअंत्यजगमनेतुप्रसवोत्तरमेवप्रायश्चित्तम् ॥ तदनुष्ठा
नंयावत्पृथगवतिष्ठेत् ॥ नतुगृहेप्रचरेत् ॥ तच्चसार्द्धकृच्छ्राब्दंहिरण्यंवासोधेनुर्वादक्षिणा ॥ इदमकामतः ॥ मत्यांत्यजसंग-

मेतु मरणाच्छुद्धिः ॥ रजस्कादितोगर्भोत्पत्तौचत्यागएव ॥ प्रायश्चित्ताकरणेतुपुल्लिंगेनांकनीयावध्येत्यन्ये ॥ अनिच्छंत्याबलादातु
लोम्येनव्यभिचारेकृच्छ्रम् ॥ द्विर्भोगेपराकः ॥ त्रिरैंदवं ॥ रेतःसेकात्प्राक्निवृत्तौउपवासत्रयम् ॥ एवंबंदिग्राहंगृहीत्वाबलाद्भुक्ता
याःसांतपनम् ॥ तथांत्यजाद्युपभोगाभ्यासेत्यागएव ॥ मनसाभर्तुरभिचारेत्रिरात्रं ॥ क्षीरोदभोजनमधःशयनंचतुर्थेहनिअ
प्सुमग्नायाद्वाविंशत्यधिकचतुःशताावृत्तगायत्रीमंत्रेणाभिषेकः ॥ वाचाभिचारेमासंक्षीरोदनमन्यत्प्राग्वत् ॥ रजोदर्शनेतुनै
नैववाचिकमानसिकव्यभिचारशुद्धिः ॥ प्रायश्चित्तंतुरजोदर्शनात्प्राक्व्यवहार्यत्वसिद्धये ॥ पतिघ्न्याःगुरुशिष्यादिगभार्याया
कृतचिन्हायाः गृहान्निर्वासनमेव ॥ इदमपिप्रसवेएवनतुस्रावादौ ॥ अन्यगर्भायास्तुयावत्प्रायश्चित्तंगृहेनिरोधएव ॥
शूद्रस्यविप्रस्त्रीगमनेवीरणकुशवेष्टितस्याग्नौदहनंविप्रस्त्रियास्तुवपनंकारयित्वासर्पिषाभ्यज्यनग्नांखरमारोप्यराजमार्गे
भ्रामयेत् ॥ ततःपूताभवेत् ॥ वैश्यस्यलोहितदर्भैर्वेष्टितस्याग्नौप्रक्षेपणम् ॥ विप्रायाःप्राग्वत् ॥ क्षत्रियस्यशरपत्रैर्वेष्टितस्यत
त् ॥ विप्रायाःपूर्ववत् एवंवैश्यस्यराजकन्यायांशूद्रस्यराजन्यवैश्यस्त्रीगमनेपि ॥ ज्ञानतइच्छापूर्वकसंगमेइदम् ॥ अकाम
तःस्वभार्यायाभ्रांत्याशूद्रस्यविप्रस्त्रीगमनेद्वादशवार्षिकं ॥ वैश्यस्यनवाब्दम् ॥ क्षत्रियस्यषडब्दम् ॥ एवंशूद्रस्यक्षत्रियवै
श्यस्त्रीगमनेषड्वार्षिकंवैश्यस्यक्षत्रस्त्रीगमनेपिषडब्दं ॥ एतदपिगर्भानुत्पत्तौद्विगुणम् ॥ शूद्रस्याकामतोत्यंतव्यभिचा
रिविप्रस्त्रीगमनेमासंगोमूत्रयावकाहारकता ॥ वैश्यक्षत्रिययोःकृच्छ्रंसांतपनम् ॥ ॥ इतिपारदार्योपपातकप्रायश्चित्ता-

नि॥ ॥अथपरिवित्तिवार्धुष्यलवणप्रायश्चित्तानि॥ ॥कनीयसिकृतविवाहेज्येष्ठस्याविवाहरादित्यंपारिवित्तंतावद्धान्य
रिवित्तिस्तत्प्रायश्चित्तंपरिवेदनप्रकरणएवोक्तम्॥ वार्धुष्यंनिषिद्धवृद्ध्युपजीवनंतत्रचांद्रादिष्वेकंत्रैमासिकंवाजातिशक्ति
गुणाद्यपेक्षयायोज्यम्॥ लवणक्रियालवणोत्पादनंतत्राप्येवंबोध्यम्॥ ॥इतिपरिवित्तिवार्धुष्यलवणक्रियाप्रायश्चि
त्तानि॥ ॥अथस्त्रीशूद्रवैश्यक्षत्रवधप्रायश्चित्तानि॥ ॥तत्रनात्रेय्याअगर्भिण्यास्त्रियावधःकामतोगुणवत्तरब्रा
ह्मणीवधेविप्रस्यषड्वार्षिकंब्रह्महत्याव्रतम्॥ क्षत्रियवैश्यशूद्रजातिस्त्रीवधेतदर्धंतदर्धंतदर्धानि॥ अमत्याचेत्सर्वत्रतत्त
दर्धं॥ सापत्नमातृभगिनीस्नुषाभार्याद्यतिप्रत्यासन्नगुणवत्तरवधेप्येतदेव॥ निर्गुणवरसापत्नभगिनीपितृष्वसृमातृष्व
सृमातुलानीपितृव्यजायाभ्रातृव्यजायाश्वश्रूणांवधेएतदेवपादोनम्॥ निर्गुणतरायाःसपिंडसगोत्रस्त्रियावधेऽर्धं॥ अ
सोमपाग्निहोत्रिश्रोत्रियपत्नीत्वादिगुणविशेषेद्विगुणम्॥ गुणानामाधिक्येप्रायश्चित्ताधिक्यं॥ सकृत्सवर्णव्यभिचारिणी
नांब्राह्मण्यादीनांवधेवृषभैकादशगोदानदक्षिणासहितसंवत्सरव्रतंगोदानसहितषाण्मासिकव्रतंधेनुसहितसांतपनंधे
नुद्वयदानंचेतिक्रमेण॥ इदंकामतःअकामतश्चेत्तदर्धम्॥ अथसकृत्सवर्णव्यभिचरितास्वप्रसूतास्वर्धम्॥ प्रातिलोम्येन
व्यभिचरितब्राह्मण्यादिवधेतुगोवधोक्तंयथार्हंयोज्यम्॥ प्रातिलोम्येनात्यंतव्यभिचरितानांतत्प्रसूतानांब्राह्मण्यादीनां
वधेक्रमेणचर्मकार्मुकच्छागमेषदानानि॥ चर्मात्रचर्ममयंजलभांडम्॥ अज्ञानतइदं॥ ज्ञानतस्तद्द्विगुणम्॥ स्मृत्यर्थसारे

॥अनुलोमेनात्यंतव्यभि
तु ज्ञानतो वधे षट् चतुर्द्व्येकमासाः प्रसूतादीनां वधे चैवमित्युक्तम्॥ अप्रसूतास्तु किंचिदधिकम्॥ अनुलोमेनात्यंतव्यभि
चरितास्ततो पि किंचिदधिकम्॥ गणिका कर्मणाजीवंतीनां विप्रादिकांतानां वधे किंचिज्जलदानम्॥ जलस्पर्शमात्रमि
त्यन्ये पत्यादिहननशूद्रगमनादिभिरतिदुष्टब्राम्हण्यादिवधे तु न किंचित्प्रायश्चित्तम्॥ किंतु विपरीतं पुण्यमेव इत्याहुः॥
जातिमात्रक्षत्रियवैश्यशूद्रवधेषु क्रमेण त्रैवार्षिकवार्षिकषाण्मासिकानि ब्रम्हहव्रतानि॥ ॥त्रैमासिकसार्द्धनवमासिका
नीत्यन्ये॥ अमत्येदं॥ मत्यातु द्विगुणम्॥ क्षत्रियादिकर्तृके एतद्वधे पादपादहानिः॥ प्रांचस्तु॥ अमत्या जातिमात्रक्षत्रवधे नवत्स
च्छ्राणि नाहद्वैश्यवधे चत्वारि॥ शूद्रवधे द्वयम्॥ ज्ञानतः सर्वत्र द्विगुणमित्याहुः॥ नृपतिद्वधे द्वादशवार्षिकम्॥ प्रयोजकादी
नां पादपादहानिः सर्वत्र॥ अत्र सर्वत्र शवशिरःकपालध्वजता वश्यकी॥ कामतः सकृत्तु प्रतिलोमसूतवधे चांद्रम्॥ वैदेहवधे
द्विपादोनम्॥ चांडालवधे द्विपादम्॥ मागधवधे पादोनम्॥ आयोगववधे द्विपादं॥ ज्ञानतोर्द्धं॥ चांडालवधे द्विचांद्रमित्यर्थः॥ द्वि
गुणमंत्यजातिवधे॥ ततः स्त्रीवधे षड्रात्रमुपवासः तिलदानं चेत्याहुः॥ चोराणामेतेषां वधे एकोपवासपूर्वकं घृतप्राशनम्
॥ ॥अथान्यहिंसायां तत्रास्थिमतां कृकलासादीनां अनुक्तप्रायश्चित्तानां सहस्रवधे अनस्थिमतां क्षुद्राणां जलूक
मत्कुणयूकादंशादीनां शकटपूर्णवधे कृमिकीटपतंगपिपीलिकाभ्रमरदंशमक्षिकादीनां सहस्रवधाभ्यासे च षाण्मासिकं
शूद्रहव्रतम्॥ दशधेनुदानं वा॥ परिमाणाधिक्ये प्रायश्चित्ताधिक्यं॥ इतोल्पपरिमाणवधे मलिनीकरणात्त्र्यहं ततः यावक

पानं ॥ अमत्याल्पैतद्वधे घुणादिजंतुवधे च किंचिद्देयम् ॥ अष्टमुष्टिमितधान्यं किंचित् ॥ ततोप्यल्पे [illegible]द्‌तमे अनस्थिजंतोश्च प्राणायामाः ॥ फलपुष्पधान्यांतरसंजातप्राणिवधाभ्यासे दिनमेकं घृताहारः ॥ क्षत्रियादीनां पादपादहानिः ॥ स्त्रीणामर्धं ॥ गौडास्फुक्कलासादिसहस्रवधे जलूकादिशकटवधे च तप्तकृच्छ्रम् ॥ अभ्यासे प्रागुक्तमित्याह ॥ मार्जारगोधानकुलमूषकमंडूककुक्कुटचाषकाकोलूकश्वसर्पादीनां प्रत्येकं वधे पादकृच्छ्रं ॥ त्रिरात्रं क्षीरपानं वा ॥ एकवर्षवत्सदानं वा ॥ समुद्रगानदीस्नानं ॥ योजनगमनं वा यथार्हं योज्यम् ॥ मत्या द्विगुणं ॥ अभ्यासे आवृत्तिः मत्याभ्यासे कायम् ॥ समुदितवधाभ्यासे षाण्मासिकशूद्रवधव्रतम् ॥ दशधेनुदानं वा ॥ अत्र कपालधारणाधिकं नास्ति ॥ कोकिलाकपोतशुककपिंजलटिट्टिभखंजरीटानां पुरुषभारवधेप्येतदेव ॥ गजवधे पंचनीलवृषभदानं ॥ हयवधे तु वरवस्त्रयुग्मम् ॥ उष्ट्रे गुंजाभारः स्वर्णं वा गुंजामितं ॥ खरे वृष एकवर्षवत्सो वा ॥ अजामेषयोरप्येवं ॥ अत्राभ्यासे त्रिरात्रं उपवासोपि ॥ अत्यंताभ्यासे सप्तरात्रोपवासश्च ॥ हंससारसपारावतमयूरचक्रवाकबकबलाकाविषजकंकश्वावित्कारंडवश्येनभासराजपक्ष्यादिषु गौर्देया ॥ गृध्रकाकोलूककपोतकुक्कुटवृहत्पक्ष्यादिषु त्रिवर्षो वत्सः ॥ शुकचाषखंजरीटलावकसारिकादिषु द्विवर्षवत्सः ॥ टिट्टिभतित्तिरकारंडवचटकादिषु क्षुद्रपक्षिषु एकवर्षो वत्सः ॥ क्रव्याद्व्याघ्रसृगालादिवधे वानरहंसश्येनकंकगृध्रादिषु जलचरबलाकादिपक्षिषु स्थलचरकाकादिषु भासे मयूरे च प्रत्येकं वधे धेनुर्देया ॥ अक्रव्याद्हरिणादिमृगेषु खंजरीटादिपक्षिषु च वत्सतरी देया ॥ सर्पादिसरीसृ

पेषुलोहदंडस्तीक्ष्णोभयाग्रः॥ यद्वाशूकेषुद्विवर्षोवत्सः॥ क्रौंचेत्रिवर्षः॥ महिषादिवधेवत्सतरी॥ वराहेघृतकुंभः॥तित्तिरौति
लद्रोणः॥ नपुंसकमृगपक्ष्यादिवधेमाषमितंसीसंपलालभारोवा॥ अन्नदानाशक्तौतुस्मृत्यर्थसारे॥गजाश्वोष्ट्रखरगौरगवयऋ
क्षमहिषमेषादिष्वमत्याप्रत्येकंवधेसार्द्धकृच्छ्रः॥ समस्तवधेचांद्रम्॥ मत्याप्रत्येकंवधेपिचांद्रम्॥मत्यासमस्तवधेत्वावृत्तिश्चां
द्रस्य॥ हरिणसारंगरुरुवराहसिंहगंडकव्याघ्रमहामत्स्यग्राहशिशुमारादिष्वमत्याप्रत्येकंकृच्छ्रः॥ समस्तवधेकृच्छ्रद्वयं॥म
त्याप्रत्येकंवधेचैवम्॥ समस्तवधेचांद्रम्॥ श्ववृकवानरजंबूकविड्वराहादिषुअमत्याप्रत्येकंत्रिरात्रंसमस्तवधेकृच्छ्रः॥ मत्या
प्रत्येकंवधेचैवम्॥ समस्तवधेद्विगुणम्॥मार्जारसर्पाजगरडुंडुभनकुलमंडूकमूषककर्कटशलभसेगाधोधाशल्यककूर्मश-
शादिष्वमत्याप्रत्येकंवधेपादकृच्छ्रः॥ समस्तवधेत्वर्धकृच्छ्रः मत्याप्रत्येकंवधेचैवं समस्तवधेकृच्छ्रः हंसादिष्वमत्याप्रत्येकंव
धेकृच्छ्रः गृध्रादिषुपादन्यूनः शुकादिष्वर्धकृच्छ्रः मत्याद्विगुणं टिट्टिभादिषुपादः समस्तवधादौद्विगुणंहरिणादिषुहंसादिषु
चहंतृबहुत्वेप्रत्येकंत्रिरात्रं श्वादिषुगृध्रादिषुचैवं गजादिषुप्रतिपुरुषंकृच्छ्रः मार्जारादिषुकादिषुचप्रत्येकमुपवासः टिट्टिभा
दिषुप्रतिपुरुषंनक्तम्॥ मृतप्रायेषुतुगजादिषुअमत्याप्रत्येकंवधेत्रिरात्रम्॥ हरिणादिषुद्विरात्रम्॥खरादिषुचतुर्थकालाहा
रः॥ मार्जारादिषूपवासः॥ गृध्रादिषुनक्तम्॥ शुकादिष्वेकभक्तं॥ टिट्टिभादिषुजलेप्राणायामः॥ अविज्ञातसर्वमृगपक्षिषुभिरा
श्रमितिइदंसर्वदेशकालजातिशक्तिगुणाद्यपेक्षयागुरुलघुविषयेयोज्यम्॥ ॥ इतिस्त्रीशूद्रादिवधेन्यहिंसायांचप्रायश्चि

त्तानि॥ ॥अथद्रुमादिछेदनेप्रायश्चित्तम्॥ ॥वृक्षगुल्मलतागुच्छक्षुपप्रतानौषधिवीरुधांफलपुष्पादिभिरुपयोगिनीनां
यज्ञादृष्टार्थंविनाच्छेदेशतगायत्रीजपः॥तत्रवृक्षाःपिप्पलाशोकाम्रपनसाद्याः॥गुल्मामालत्यादयः॥लताद्राक्षादयः॥गुच्छाः
॥कुरंटकादयः॥क्षुपाःकरवीरादयः॥प्रतानाःसारिवादयः॥औषध्यःशाल्यादयः॥वीरुधोगुडूच्याद्याः॥इदमकामतोऽस
कृच्छेदेकामतःसकृच्छेदेच॥ग्राम्यारण्यौषधिच्छेदनात्यंताभ्यासेतुदिवागोपरिचर्यांकृत्वारात्रौक्षीरंपीत्वास्वपेत्॥काम
तोऽभ्यासेऽकामतोत्यंताभ्यासेचवृक्षलतादिविषयेप्यर्धकृच्छ्रः॥फलवतांछेदेप्राजापत्यम्॥कृष्याद्युपकरणादिदृष्टार्थं
यज्ञाद्यदृष्टार्थंचच्छेदेतुनदोषः॥महाफलप्रदानांनारिकेलादिवृक्षाणांकामतःच्छेदनात्यंताभ्यासेसंवत्सरव्रतम्॥सकृ
च्छेदेतूक्तद्विगुणजपः॥एवंचैत्यश्मशानसीमापुण्यस्थानदेवालयस्थेवृक्षेऽन्यस्मिन्नपिचतुष्पथस्थेमहाछायावृक्षेप्रस्था
तेवावृक्षेछिन्नेद्विगुणजपःप्राजापत्यंचबोध्यम्॥शूद्रस्यतुदंडानुसारेणजपस्थानेद्विरात्रोपवासादिकल्प्यम्॥इत्थंछिन्न
वृक्षादेर्ग्रहणविषयं॥छित्वापरिग्रहणेतुदंडाधिक्यदर्शनात्प्रायश्चित्तातिरेकोबोध्यः॥कामतोत्यंताभ्यासेवृक्षादौसर्वत्र
चांद्रादिष्वेकम्॥ ॥इतिद्रुमच्छेदप्रायश्चित्तानि॥ ॥प्रसंगाच्छ्वादिदंशेप्रायश्चित्तम्॥ ॥श्ववृकसृगालखरोष्ट्रवि
ड्वराहकाककुक्कुटवानरपुंश्चलीक्रव्यादनराश्वैर्नाभेरधईषद्दष्टोविप्रोजलेप्राणायामत्रयंकृत्वाघृतंप्राश्यशुध्यति॥अत्रघृ
तप्राशनंभोजनस्थाने॥तेनाहारांतरनिवृत्तिः॥अत्रसरुधिरदंशेषोडशप्राणायामाः॥आपोहिष्ठेत्यादिभिःस्नानंचाधि

कम् ॥ अतिगाढदंशेसमुद्रगायांनद्यांप्राणायामशतमन्यत्पूर्ववत् ॥ अत्रशक्तौसत्यांब्रह्मचारिणस्त्रिरात्रम्सायंदुग्धपान
मेव ॥ गृहस्थस्यद्विरात्रम् ॥ अग्निहोत्रिणएकाहं ॥ नाभेरूर्ध्वंदंशेइदमेवद्विगुणं ॥ मुखेदष्टस्यत्रिगुणम् ॥ मस्तकेदंशेचतुर्
गुणम् ॥ मार्जारमूषकनकुलाजमहिषीहीनजात्यारण्यमृगैश्चदष्टेदशप्राणायामाः ॥ नाभेरधईषद्दष्टस्यपंच ॥ क्षत्रियादीनां
पादपादन्यूनं ॥ शूद्रस्यामंत्रकप्राणायामाः ॥ उपवासादेवशूद्रस्यशुद्धिरित्यन्ये ॥ स्त्रीणांतुश्वादिदंशेस्नात्वोदितस्यनक्षत्रचं
द्रादेर्दर्शनात्शुद्धिः ॥ कृच्छ्रादिव्रतस्थायादंशेतुत्रिरुपवासपूर्वकंचतुर्थेयावकभोजनं ॥ ततोव्रतशेषसमाप्तिः ॥ व्रतस्थस्यपुं
सोप्येतदेव ॥ जपाद्यधिकंप्राणायामादिकंच ॥ रजस्वलायाः श्वादिदंशेतुएकोपवासमुपवासपंचकंवाकृत्वाषष्ठेपंचगव्य
पानं ॥ नाभेरूर्ध्वंतुप्रागुक्तक्रमेणद्वित्रिचतुर्गुणंबोध्यं ॥ अत्यसमर्थस्यदिवादंशेआनक्षत्राद्भोजनम् ॥ रात्रिदंशेआसू
र्योदभोजनंगायत्रीशतजपोवा ॥ यदातुश्वादिदंशजेवाशस्त्रघातादिजेवाव्रणेकृमयउत्पद्यंते ॥ तदागोमूत्रगोमयाभ्यांत्रि
संध्यंस्नानंत्रिरात्रंपंचगव्यपानंच ॥ नाभेरूर्ध्वंकंठादधःषड्रात्रम् ॥ शिरोव्रणेकृमिषुकार्यं ॥ युगपदनेकव्रणेषुकृमिसंभ
वेसांतपनंवृषभश्चदक्षिणा ॥ इदंचश्वादिदंशनिमित्तप्रायश्चित्तसहितमेव ॥ शस्त्रादिव्रणेकृमिदर्शनेतुकेवलमेवैतत्
क्षत्रियादीनांपादहानिः ॥ अन्यव्रणेषुकृमिदोषेतुउपवासहिरण्यदानकृच्छ्रैःशुद्धिः ॥ ॥इतिश्वादिदंशकृमिव्रणादि-
प्रायश्चित्तानि शास्त्रोक्तोपायार्जितादर्थांतरेणोपजीवनंनिंद्यार्थजीवनं ॥ तत्रचांद्रादिष्वेकंत्रैमासिकंवाजातिशक्त्या

द्यपेक्षया ॥ नास्तिक्यं वेदनिंदनं तेन जीवनं च परलोको नास्तीत्यभिनिवेशश्च ॥ तस्मिन् सकृत् कृते कृच्छ्रः ॥ तेन जीवनेति कृच्छ्रः ॥ अज्ञानतोऽर्धम् ॥ ज्ञानतोऽभ्यासे चांद्रादिष्वेकम् ॥ अत्यंताभिनिवेशेन बहुकालाभ्यासे ग्रीष्मवर्षाहेमंतर्तुषु क्रमेणातपाभ्रावकाशजलशयनानि ॥ पंचवर्षप्रतिग्रहेषु भैक्ष्यं वा ॥ ॥ अथ व्रतलोपे ब्रह्मचारिणः प्रायश्चित्तम् ॥ ॥ सच ब्रह्मचारिणः पुंस्त्रीमैथुनरूपः सर्वसाधारणस्तु देवताराधनाद्यर्थं गृहीतव्रतलोपः ॥ प्रायश्चित्तार्थं प्रक्रांत कृच्छ्रादिव्रतच्युतिश्च ॥ किंचिद्व्रतं संकल्प्य त्यागश्च संकल्पित स्नानकृच्छ्रतादेर्मिथ्याकरणं च ॥ शिष्टप्रतिषिद्धस्य भोजनव्यतिरेकेण मया जलं न पातव्यमित्यादि नियमत्यागश्च ॥ तत्र कालदेशशक्तिबहुत्वाल्पत्वादिकं पर्यालोच्योपपातकसामान्यप्रायश्चित्तानि योज्यानि ॥ ॥ अवकीर्णतारूपे ब्रह्मचर्यादिव्रतलोपे तूच्यते ॥ ॥ तत्र गुरुतल्पतत्समानेतरां स्त्रियं गत्वा नैर्ऋतदैवतेनैकाक्षेण गर्दभेण पशुनारण्ये चतुष्पथे रात्रौ लौकिकाग्नौ पाकयज्ञधर्मेणाश्वलायनादि गृह्योक्तपशुकल्पतंत्रेण स्वातस्याजिनमूर्ध्ववालं परिधाय त्रिषवणस्नायी लोहितपात्रः स्वकर्माचक्षाणः सप्तगृहे भैक्ष्यं कुर्वन् एकवारभोजी वर्षेण शुध्येत् ॥ एवमशक्तौ नैर्ऋतं चरुं निरुप्य पक्का कामाय स्वाहा ॥ नैर्ऋत्यै स्वाहा ॥ रक्षोभ्य स्वाहा देवताभ्यः स्वाहेति हुत्वा होमशेषं समाप्योक्तमब्दव्रतं चरित्वा शुध्येत् ॥ इदमश्रोत्रियविप्रपत्न्यां श्रोत्रियवैश्यपत्न्यां च ज्ञेयं ॥ यदा तु गुणवत्योः श्रोत्रियपत्न्योर्विप्रक्षत्रियस्त्रियोरवकीर्णीनदा त्रिवार्षिकं द्विवार्षिकं च व्रतं होमश्च ॥ अमत्यावकीर्णत्वे ईषत् व्यभिचारिण्यां

चनत्वे वार्षिकव्रतविषये षाण्मासं ब्रह्महव्रतं चीरवासाश्चरेत् ॥ द्विवार्षिकादिविषये त्वमत्यार्धम् ॥ अत्यंतव्यभिचरितशूद्रायां
सचैलस्नातस्योदकुंभदानं ॥ तादृग्वैश्यायां चतुर्थकालाहारो विप्रान् भोजयेत् ॥ तृणभारं च गोभ्यो दद्यात् ॥ तादृक्क्षत्रियायां
त्रिरात्रोपोषितेन घृतपात्रं देयम् ॥ तादृक्विप्रायां षडुपवासा गोदानं च कार्यम् ॥ गोष्ववकीर्णस्य पलालभारसीसमाषयो
र्दानम् ॥ स्त्रीसंभोगमंतरेण मत्यारेतोविसर्गे ब्रह्मचारिणो नैर्ऋतयागमात्रं ॥ दिने स्वप्ने रेतोविसर्गे चैवम् ॥ कृच्छ्रचांद्रायणा
दिव्रतेषु अनिदिष्टब्रह्मचर्येषु रेतस्कंदनेऽप्येवम् ॥ रात्रिस्वप्ने रेतस्कंदने ब्रह्मचारी स्नात्वा अर्कमर्चयित्वा पुनर्मामैत्विंद्रियं जपे
त् गायत्रीं वा त्रिर्जपेत् ॥ अष्टशतगायत्रीजप इत्यन्ये ॥ वानप्रस्थयत्योर्मत्या ब्रह्मचर्यलोपे पराकत्रयमुक्तमवकीर्णिव्रतनम्
मत्याकृच्छ्रत्रयम् ॥ ॥ अथ प्रसंगादुच्यते ब्रह्मचारिणः प्रायश्चित्तम् ॥ ॥ ब्रह्मचारिण अनातुरस्य गुरुशुश्रूषादिगु
रुतरकार्यव्यग्रतया सप्तरात्रं भैक्ष्यस्याग्निकार्यस्य वा लोपे ॥ कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामाय स्वाहा ॥ कामावपन्नो
ऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहा ॥ इत्याभ्यामाज्याहुती हुत्वा ॥ समासिंचंतु मरुतः समिंद्रः सबृहस्पतिः समायमग्निः सिं
चत्वायुषा च बलेन चेत्यंतेनोपतिष्ठेत् अव्यग्रतया तल्लोपे त्ववकीर्णिव्रतम् ॥ अन्ये समरात्रसविकीर्णिव्रतमित्याहुः मणिवा
सोगवादीनां प्रतिग्रहो अष्टसहस्रगायत्रीजपः ॥ उपनयनोत्तरं दिनचतुष्टयव्रतमध्ये मेखलायज्ञोपवीतदंडादीनां नाशे व
स्त्वं सूत्रांतरं वा धृत्वा मनोज्योतिरित्यादि मनोलिंगाभिस्त्वमग्ने व्रतपा आसीत्यादिव्रतलिंगाभिश्चतस्र आज्याहुतीर्हुत्वा

पनयनोक्तविधिनाधारयेत् असडैक्ष्यभोजने स्कसोंदितेसुप्तास्तमितेच वांतेदिवास्वापेनग्नस्त्रीदर्शनेनग्नस्वापेस्मशानक्रम-
णहयाद्यारोहणपूज्यातिक्रमेषुचैतैर्जुहुयात् यज्ञोपवीतंविनातदन्यथावाकृत्वाभोजनेविण्मूत्रोत्सर्गेवागायत्र्यष्टसहस्रजपः
॥पानेत्रिःप्राणायामाः॥ फलादिभक्षणेषट्॥ भोजनमेहनयोरप्येवमित्येके॥ सूर्योदयस्वापिनोदिवोपवासोदशाधिकसह
स्रगायत्रीजपः॥ अस्तमयस्वापिनस्तुरात्र्युपवासोत्तरदिनेप्रागुक्तजपइत्यन्ये॥ स्थावरजंगमवृक्षवल्मीकपशुसरीसृपा
दिप्राणिवधेकूष्मांडीभिर्होमः॥ यज्ञोपवीतमेखलाजिनदंडानांलोपेव्याहृतिहोमंषट्प्राणायामांश्चकृत्वापुनर्धारयेत्॥ सं-
ध्याग्निकार्यलोपेस्नात्वाष्टसहस्रगायत्रीजपः॥ भिक्षाटनमकृत्वास्वस्थस्यैकान्नाशनेष्टशतजपः॥ भिक्षायांतुक्वचिदेकान्ना
शनेदोषोन॥ शौचाचमनसंध्याभिक्षाग्निकार्यकौपीनमेखलाजिनलोपेशूद्रादिस्पर्शेछत्रपादुकाभ्यंगोद्वर्तनानुलेपांजनजल
क्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोजनादिकरणेसकलदोषपरिहारार्थंकृच्छ्रत्रयंमहाव्याहृ-
तिहोमश्च॥ बहुकालंबहुतरधर्मलोपेतंवोधियेतिमंत्रस्यशिवालयेलक्षजपः॥ गुरुशुश्रूषाद्यल्पलोपेष्टशतजपः॥ मधुमद्यमां
सलशुनभक्षणेकृच्छ्रं॥ मत्यापराकः॥ अभ्यासेद्विगुणं॥ पुनरुपनयनंच॥ ततआरब्धव्रतस्यसमापनम्॥ मद्यग्रहणंक्षत्रि
यादिविषयं॥ तदेकनाश्यरोगाद्यर्थंमध्वादिकंगुरूच्छिष्टंकृत्वाभोक्तव्यम्॥ ततोरोगनिवृत्तौहंसःशुचिषदित्यादित्यमुपति
ष्ठेत्॥ मध्वादेरकामतोभक्षणेदोषोन॥ गुर्वाज्ञाविघातेगुरोःप्रतिकूलाचरणेचस्नात्वाप्रणिपातादिनागुरुंप्रसाद्यगतकोपद्वः

स्वंकृत्वाशुध्येत् ॥एतदज्ञानपूर्वकंसकृदपराधे॥अन्यत्रात्यंताभ्यासेपितृविषयेब्रह्महत्यावत्॥ब्रह्मचारिणोयतिव्रतिनो
श्चमासिकादिप्रेतश्राद्धभोजनेत्रिरात्रमुपवासश्चचतुर्थेनक्तंप्राणायामत्रयंचपंचमदिनेघृतप्राशनंच॥अनापदितुकार्यं॥ए
कोपवासः पंचगव्यंच॥अभ्यासेतप्तकृच्छ्रादि॥शूद्रान्नभोजनेपराकः॥क्षत्रियोच्छिष्टभोजनेस्नात्वाष्टशनजपोद्वादशदिनमु
पवासश्च॥उच्छिष्टमत्रतद्भोजनोत्तरंपाकपात्रेवशिष्टम्॥वैश्यशूद्रोच्छिष्टेधिकंकल्प्यं॥चोरव्याघ्रादिभयाकुलदेशेमहांध
कारेरात्रौगुरुणास्वकार्यार्थंप्रेषितःशिष्योदैवान्मृतश्चेत्गुरोःकृच्छ्रत्रयं॥सर्वत्रारोग्यार्थमौषधपथ्यान्नदानेनतदर्थेक्रिय
माणयत्नेर्यागोब्राह्मणादिप्राणिमृतौनकश्चिद्दोषइतिप्रासंगिकःसर्वहिंसापवदः॥ ॥इतिव्रतच्युतिप्रायश्चित्तानि॥ ॥
अथाभिशंसिप्रायश्चित्तम्॥ ॥यस्त्वविप्रोविप्रंमहापातकादिनामिथ्याअभिशंसेत्॥अनेनब्रह्महत्यादिकंगोहत्यादिवाकृ
तमितिसंव्यहर्तृजनान्प्रतिमिथ्याब्रूयात्समासमंबुभक्षोनियतेंद्रियःशकृद्वर्तीमंत्रजपशीलःशुध्येत्॥इदमुपपातकाभिशंस
नाभ्यासेमहापातकस्यसकृदभिशंसनेचक्षत्रियाद्यभिशंसनेविप्रस्यार्धार्धहानिः॥यदाक्षत्रियादयोविप्रमभिशंसंतितदाते
षांद्वित्रिचतुर्गुणम्॥शूद्रस्यजपस्थानेऽमंत्रकप्राणायामाः सत्याभिशंसनेसर्वत्रतदर्धम्॥अतिपातकमिथ्याभिशंसिनाप्युक्त
मासव्रतंपादोनम्॥अनुपातकाभिशंसिनांततोन्यूनम्॥उपपातकेसकृदभिशंसनेनततोन्यूनम्॥उपपातकाभिशंसनाभ्यासेमा
सव्रतमुक्तम्॥प्रकीर्णकेषुसकृदभिशंसनेततोपिन्यूनंअतिपातकादिष्वभ्यासेकिंचिदधिकमूह्यम्॥अथमिथ्याभिशस्तस्यम

हापातकेषु कृच्छ्रम् ॥ अतिपातकादिषु पादपादह्रासः मिथ्याभिशस्तस्य वर्षपर्यंतं प्रायश्चित्ताकरणे मासमंबुभक्षिता ॥ तत्रसा
र्द्धकृच्छ्रद्वयम् ॥ महापापाभिशस्तस्य वर्षोत्तरं द्विमासम् तत्र पंचकृच्छ्राः ॥ गुरुविषये कामतो मिथ्याभिशंसनावृत्तौ पंचवर्षं विप्रकुले
भैक्ष्याचरणं संवत्सरं वा षण्मासं वा गवानुगमनम् अत्राभ्यासाभिनिवेशादितारतम्येन व्यवस्था ॥ ॥ इति अभिशंसि मिथ्या
भिशस्तयोः प्रायश्चित्तानि ॥ ॥ अथ स्कृतविक्रये प्रायश्चित्तम् ॥ ॥ सच धनं गृहीत्वा दास्यार्थं कन्यापुत्रादेर्दानम् ॥ एवं भा
र्याविक्रये प्यूत्यम् ॥ तत्र कन्याविक्रये देवगृहप्रतिश्रयोद्यानारामपुष्करिणीसभाप्रपापुण्यसेतुविक्रये सुकृतविषये च चांद्रादि-
ष्वेकम् अथवा त्रैमासिकं ॥ आपदि तप्तकृच्छ्रः ॥ अत्यंतापदि सांतपनम् ॥ पुत्रविक्रये च सर्वं द्विगुणम् ॥ एकपुत्रस्यानापदि का
मतः स्कृतविक्रये च त्रिषवणस्नायी अधःशायी चतुर्थकालाशी वत्सरेण शुद्ध्यति ॥ ईदृशकन्याविक्रये तदर्द्धेन शुद्धिः ॥ कामतो
नापदि अनेकपुत्रस्य स्कृतविक्रये चांद्रं ॥ आपद्येकपुत्रस्य कामतः स्कृतविक्रये चांद्रद्वयम् ॥ ॥ इति पुत्रकन्याविक्रयप्रायश्चि
त्तानि ॥ ॥ स्कृतविक्रयोत्तरं धान्यपुष्पपशुस्तेय इति उपपातकगणे पठितं तत्प्रायश्चित्तं स्तेयप्रकरण एवोक्तम् ॥ ॥ अ-
था याज्ययाजने प्रायश्चित्तम् तत्र व्रात्ययाजको व्रात्योपनेता व्रात्याध्यापकः अहीनयाजकः शूद्रांतेष्टिकर्मयाजको वेदविप्लावी
तस्करे नरशरणागतत्यागी तस्कररक्षकः वशीकरणोच्चाटनादिरूपाभिचारकर्ता चामत्या कृच्छ्रसांतपनातिकृच्छ्रेषु त्रिषु य
थायोग्यं क्वचित्समुदितं क्वचिदेकं कुर्यात् ॥ आततायीविषयाभिचारे न दोषः ॥ व्रात्यलक्षणं प्रागुक्तम् ॥ द्विरात्रादिद्वादशाहांतोह

गणो यज्ञोहीनः मत्या व्रात्यस्योपनयनाध्यापनयाजने शूद्दालकव्रतम् मत्यासर्वेष्वेवं वा ॥ उद्दालकव्रतं च व्रात्यप्रकरणे उक्तम् ॥ वि
प्राद्यंते ष्टिकर्म स्फलोभात् याजने क्रमेण कार्यो तिकृच्छ्रस्तप्तकृच्छ्रश्च ॥ अभ्यासे द्विगुणम् ॥ अत्यंताभ्यासे त्रिगुणम् ॥ शूद्राद्य-
याज्ययाजने तन्नो रोहिण्येत दध्यापने वा मत्या षांद्रादिष्वेकमशक्तौ कृच्छ्रं मत्या त्रैमासिकम् ॥ अभ्यासे द्विगुणानि ॥ कामतोत्यं
तशूद्रयाजनाभ्यासे ग्रीष्मवर्षाहेमंतेषु क्रमेण पंचतपोभ्रावकाशजलशयनानि कुर्यात् ॥ गोमूत्रयावकाशनं च ॥ अकामतोप्या
सेन लब्धसर्वद्रव्यत्यागेन शतसहस्रप्राणायामाभ्यासेन शुध्यति ॥ परिवेदकादियाजने प्येवं ॥ सर्वत्र लब्धद्रव्यत्यागपूर्वकमे
वैतत्प्रायश्चित्तानुष्ठानम् ॥ एवं पर्वचांडालश्रोत्रावकाशाद्यनध्यायेषु अध्ययनमशुचिनाध्ययनं वा निषिद्धाध्ययनं निषिद्धाध्याप
नं च वेदविप्लावनम् तत्राद्ये मत्या त्रिरात्रमुपवासः ॥ अभ्यासे कृच्छ्रं ॥ अत्यंताभ्यासे कृच्छ्रत्रयं ॥ कामतोत्यंतानवच्छिन्नाभ्या
से संवत्सरं यवौदनभोजनम् ॥ एतदेव गर्हिताध्यापकयाजकयोर्दक्षिणात्यागमात्रमधिकम् ॥ स्मृतिधर्मशास्त्रव्याख्याने धी
ते च तदर्धं ॥ नित्यानध्यायेष्वध्ययने यावदधीतं तावज्जले घमर्षणवत्स्वाध्यायं जपेत् ॥ अशक्तौ जलेस्थित्वा जपमात्रम् ॥ अ
त्यशक्तः स्थले जपेत् ॥ मत्या प्रत्यनध्यायमुपवासः ॥ अशुचिनाध्ययने चैवम् ॥ नैमित्तिकानध्यायेष्वध्ययने चाप्येवं ॥ दुर्बो-
धस्य तदर्धं ॥ काककुक्कुटमूषकमंडूकादेरंतरागमनेन न्क्रमम् ॥ तावदध्ययनविरामश्च ॥ गवाश्वमहिषादिपशुस्त्रीशूद्राद्यंतरा
गमने नूपवासः ॥ मार्जारसर्पनकुलपंचमजात्यादेरंतरागमने त्रिरात्रमुपवासस्त्रिषवणस्नानं च ॥ जानुभ्यां ग्रामांतरगमनं वा

॥ श्ववृकसृगालवानररजकादीनामंतरागमने कायम् ॥ खरवराहोष्ट्रादिचांडालसूतिकोदक्याशवादेरंतरागमने कायत्रयं ॥ गौर
गवयाजादिब्रह्मोक्तनास्तिकादेरंतरागमने त्रैमासिकं ॥ शशमेषश्वपाकादिगमने षाण्मासिकम् ॥ गजगंडसारव्याघ्रमहापात
कीकृतघ्नादिगमने कृच्छ्राब्दम् ॥ तावत्प्रायश्चित्तकालमनध्ययनं च ॥ अमत्या सर्वत्रार्धम् ॥ केचिदंतरागमने सर्वत्र तदानीमेवा
ध्ययनं विरामे प्रायश्चित्तं नेत्याहुः ॥ ॥ इत्ययाज्ययाजनादिप्रायश्चित्तानि ॥ ॥ अथ पितृमातृसुतत्यागे प्रायश्चित्तम् ॥

॥ अथ पतितानां पितृमातृगुरूणां गृहान्निष्काशनं हिंसः ॥ तत्र मत्या तत्कर्तुश्चांद्रादिष्वेकं त्रैमासिकं वा ॥ जातिशक्तिगु
णाभ्यासादिकापेक्षया योज्यम् ॥ मत्याभ्यासे मासं षष्ठान्नकालता मासं संहिताजपो वाधिकः ॥ भार्याकृतत्यागेप्येवम् ॥ मा
तुस्तु सर्वदोषेप्यत्याज्यत्वेन सर्वथा रक्षणीयत्वात् ॥ ॥ इति पित्रादित्यागप्रायश्चित्तानि ॥ ॥ अनंतरं तडागारामविक्रय इ-
त्युपपातकं पठितं तत्प्रायश्चित्तं तु क्रतुविक्रयप्रसंगे उक्तं वेदितव्यम् ॥ ॥ अथ कन्यादूषणे प्रायश्चित्तम् ॥ तच्चांगुल्यादिना
तस्याः क्षतयोनित्वकरणं मिथ्या तद्दोषख्यापनं च ॥ तत्र सवर्णानां कन्यादूषणे चांद्रं त्रैमासिकं वा ॥ आनुलोम्येनासवर्णकन्यादू
षणे मासं पयःपानं कार्यं वा ॥ प्रातिलोम्ये तु क्षत्रियवैश्ययोः कृच्छ्राब्दं ग्रीष्मवर्षाहेमंतेषु क्रमेणानपाभ्रावकाशजलाशयपूर्वकं
मासं गोमूत्रयावकपानं वा ॥ शूद्रस्य तु विप्रादिकन्यादूषणे वध एव ॥ अत्यंताभ्यासे सवर्णस्यापि कृच्छ्राब्दं ॥ सोमविक्रयी वृ
षलीपतिः कौमारदारत्यागी शूद्रयाजको गुरोः प्रतिहंता सुराभिन्नमद्यपो ब्राह्मणवृत्तिघ्नः कूटव्यवहारी मित्रध्रुक् शरणाग

तद्घाती प्रतिरूपवृत्तिश्चैतेः मत्या प्रवृत्तास्त्रैमासिकं व्रतं कुर्युः ॥ मत्या षाण्मासिकं ॥ अभ्यासे कृच्छ्राब्दम् ॥ ॥इति कन्यादूषणादिप्रायश्चित्तानि अथ क्रमप्राप्त परिवेदकयाजनादौ प्रायश्चित्तम् ॥ ॥परिवेदकयाजने १ तस्मै कन्यादाने २ गुरौ कौटिल्ये ३ आत्मार्थपाकारंभे ४ च मद्यपायाः स्वस्त्रिया अपि उपभोगरूपे मद्यपस्त्रीनिषेवणे देवताराधनाद्यर्थं गृहीतव्रतलोपेन्यस्मिन्व्रतलोपे चैतेषूपपातकेषु चांद्रादिष्वेकं त्रैमासिकं वा ॥ इति परिवेदकयाजनादिप्रायश्चित्तानि ॥ ॥अथ स्वाध्यायाग्निसुतत्यागे-प्रायश्चित्तम् ॥ ॥तत्रात्यंतापदि स्वल्पकालमधीतवेदत्यागे कायम् ॥ अधिककालेन कृच्छ्रं ॥ ततोप्यधिके पराकः ॥ मासोत्तर वेदत्यागे चांद्रम् ॥ यदा तु धनार्जनाद्यासक्ततया असच्छास्त्राभ्यासकुटुंबलालनाद्याकुलतया चिरकालं वेदं त्यजति तदा चांद्रादिष्वेकं त्रैमासिकं वा ॥ नास्तिक्याद्व्यसनासक्त्या वा वेदत्यागो ब्रह्महत्यासमः ॥ तथा नास्तिक्यादग्नित्यागे मासद्वये जाते कायं कृत्वा पुनः संधानम् ॥ मासचतुष्टये तु कृच्छ्रः ॥ षण्मासत्यागे पराकः ॥ तदूर्ध्वं चांद्रादिष्वेकं ॥ संवत्सरादूर्ध्वं त्रैमासिकं वा यदा त्वालस्यादिना त्यजति तदा द्वादशाहातिक्रमे त्रयउपवासाः ॥ मासातिक्रमे द्वादश ॥ वत्सरातिक्रमे मासोपवासो मासंपयोभक्षणं वा प्रमादादिना तत्यागे तु आत्रिरात्रात् द्वादशप्राणायामाः ॥ आषड्रात्राच्चतुर्विंशतिः ॥ आद्वादशरात्रात्संचाशत् ॥ आविंशतिरात्रात् शतं प्राणायामाः ॥ आत्रिंशद्रात्रादुपवासः ॥ आषष्टिरात्रात्त्रिरात्रम् ॥ आसंवत्सरात् कायम् ॥ अतः परं प्रत्यब्दं कायम् ॥ सर्वत्र यावत्कालमहोमी तावत् द्रव्यं तंदुलादि देयम् ॥ प्रमादभिन्नविषये तु संवत्सरादूर्ध्वे अग्नित्यागे चांद्रम्

द्विवर्षत्यागेचांद्रंसोमायनंचचांद्रद्वयंवा॥त्रिवर्षोर्ध्वंसंवत्सरंकृच्छ्राचरणंगोदानंचकृत्वापुनराधानम्॥संस्काराद्यकरणरूपेवि
भवेसत्यरक्षणरूपेचकृतन्यागेचांद्रादिष्वेकम्॥ ॥इतिस्वाध्यायाग्निकृतत्यागेप्रायश्चित्तानि॥ ॥पातित्यादित्याग-
कारणाभावेपिपितृव्यमातुलादिरूपबांधवैःसहसंभाषणसहभोजनादिवर्जनरूपेशक्तौसत्यांपालनाद्यकरणरूपेचबां
धवत्यागेभार्यायाःवेश्यात्वकरणेनजीवनरूपेस्त्रीधनोपजीवनकरणेचस्त्रियाजीवनेहिंसयाजीवनेवश्याद्यर्थौषधी-
भिःजीवनेजाल बडिशादिविधानरूपेतिलेक्ष्वादिपीडनयंत्रप्रवर्तनरूपेचहिंस्रयंत्रप्रवर्तनेमृगयाद्यूताद्यष्टादशव्यसने
षुचचांद्रादिष्वेकंत्रैमासिकंवा॥अत्यंताभ्यासेद्यूतेमृगयायांचपांचवार्षिकव्रतम्॥अनृतवादीतस्करोराजभृत्योवृक्षारो
पणवृत्तिर्गरदोग्निदोहयगजरथारोहणजीवीरंगोपजीवीश्वगणिकःशूद्राध्यापकोवृषलीपतिर्भांडीकःश्ववृत्तिर्ब्रह्म-
जीवनिक्षत्रोपजीवीचिकित्सकोदेवलकोराजपुरोहितःकितवोमद्यपःकूटकारकोपत्यनरपशुविक्रेतापारवंडयागभोज्यान्ना
शीचेत्येतेब्राह्मण्यमिच्छंतोलब्धद्रव्यंत्यक्त्वात्रैमासिकंकुर्युः॥बहुकालाभ्यासेसंवत्सरंचतुर्थकालाहारः॥तत्रश्वगणिकः
श्वगणजीवी॥भांडीकस्तूर्यादिजीवीबंदीवा॥श्ववृत्तिर्नीचसेवकःब्रह्मजीवीमूल्येनद्विजकर्मकर्ता॥द्रव्यग्रहणेनपरहास्य
करणरूपेदासीभवनरूपेवाआत्मविक्रयेशूद्रसेवारूपेशूद्रप्रेष्यत्वेहीनजातिषुमैत्रीरूपेहीनसख्येचचांद्रादिष्वेकंत्रैमासिकं
वा॥बहुकालंशूद्रसेवायांचतुर्थकालेमितभोजनंत्रिकालस्नानाभ्यांत्रिवर्षेणशुद्धिः॥समुद्रयानेब्राह्मणन्यासहरणेसर्वप

पर्येर्व्यवहारे भूम्यनृते च शूद्रसेवावत् उत्तमाजातिसख्यविघटने उपोष्य परदिने पयःपारणम्॥ अकृत सवर्णविवाहस्य हीन
वर्णविवाहो हीनयोनिनिषेवणं साधारणस्त्रीसंज्ञक वेश्यादिसंभोगश्च॥ तत्राद्ये चांद्रादिष्वेकं त्रैमासिकं वा॥ सकृद् मतिपूर्वक
वेश्यादिगमने प्राजापत्यम्॥ द्विरात्राभ्यासे कामतश्च सकृद्गमने सप्तरात्रं सक्तुकुशोदकपानम्॥ मतिपूर्वकाभ्यासे चांद्रम्॥ अत्यं
ताभ्यासे त्रैमासिकम्॥ रेतःसेकात् प्राकृनिवृत्तौ सचैलस्नानं गोभ्य औषधिभारदानं च॥ आजन्माद्यंतानवच्छिन्नाभ्यासे
गुरुतल्पवत्॥ अत्र प्रतिनिमित्तं नैमित्तिकस्य प्रायश्चित्तस्यावृत्तिर्नास्ति॥ किंतु गमनाभ्यासेऽहर्गुणवृद्धिर्मासादर्वाक्॥ तत्
तो मासगुणवृद्धिर्यावदब्दं॥ ततो द्विगुणावृद्धिर्यावत्पापाचरणम्॥ अमत्यागमनाभ्यासे तु सकृत्कृते यत्प्रोक्तं तत् त्रिभिर्दि
नैस्त्रिगुणम्॥ मासात्पंचगुणं॥ षण्मासाद्दशगुणं॥ अब्दात्पंचदशगुणं॥ त्र्यब्दाद्विंशतिगुणम्॥ ततोप्येवं प्रकल्प्यम्॥ एव-
मुपपातकाभ्यासे तूक्तप्रकारविशेषं सर्वत्रोह्यम्॥ महापातकाभ्यासे तु सकृत्कृते यत्प्रोक्तं तद्द्वितीये द्विगुणम्॥ तृतीये त्रिगुणम्
चतुर्थे निष्कृतिर्नास्तीत्यादिकम्॥ अगृहीताश्रमित्वमनाश्रमित्वं॥ वर्षपर्यंतमाश्रमं विनावस्थाने प्राजापत्यं कृत्वाश्रमस्वीका
रः॥ द्वितीये तिकृच्छ्रः॥ तृतीये कृच्छ्रातिकृच्छ्रं॥ अत ऊर्ध्वं चांद्रादि इत्यापदि॥ अनापदि तु प्रथमेब्दे चांद्रादिष्वेकं त्रैमासिकं वा
॥ ततो वर्षवृद्धौ द्वित्रिचतुर्गुणम्॥ परपाकरतिः परान्नपुष्टता॥ चार्वाकादिशास्त्राभ्यासोसच्छास्त्राधिगमनं॥ स्वर्णाद्युत्पत्तिस्था
नेषु सजाज्ञयाधिकारित्वमाकराधिकारस्तेषु भार्याविक्रये च चांद्रादिष्वेकं त्रैमासिकं वा॥ ॥ इति परान्नपुष्टतादि चतुरूप

पातकप्रायश्चित्तानि ॥ ॥अथासत्प्रतिग्रहे प्रायश्चित्तानि ॥ ॥ तत्र प्रतिग्रहस्यासत्त्वं चातिदुष्टचांडालादेः कर्मदुष्टपतितादेः
श्च दातृत्वे भवति ॥ गुरुक्षेत्रादिदेशे ग्रहणादिकालेच भवति ॥ स्वरूपतोपि क्रूरामद्यमेषीकृष्णाजिनकालपुरुषमृतशय्योभय
तोमुख्यादेरसत्त्वम् ॥ मद्यं वृक्षादिसंभवं धान्यसंभवा क्रूरा ॥ तत्र निमित्तद्वयसमावेशो यथा पतितादेर्मेष्यादिप्रतिग्रहः ॥ तत्र
निमित्तद्वयसमावेशे ब्रह्मचर्यपूर्वं गोष्ठे वासः प्रत्यहं चि सहस्रगायत्रीजपपूर्वकं मासं पयोव्रतम् ॥ अभ्यासे तदा जले वासः
षष्ठेकाले पयःपानं मासमेवं कुर्यात् ॥ त्रिचतुर्निमित्तसन्निपाते चैवं ॥ अंते विप्रभोजनमुभयत्र ॥ यदैकमेव निमित्तं तदा चांद्रं
पवित्रेष्टिर्मृगारेष्टिर्मित्रविंदेष्टिर्गायत्र्या लक्षजपो वा ॥ सर्वत्रानुक्तौ दातृदेशकालद्रव्येष्वदुष्टेषु द्वादशनिष्कप्रमाणद्रव्यप्रति
ग्रहे कार्यं ॥ एवं सर्वत्र द्रव्यानुसारात् प्रायश्चित्तवृद्धिह्रासौ ॥ दातृदेशद्रव्यकालेषु अन्यतरदोषे प्रायश्चित्तस्यैकैकगुणा वृद्धिः
॥ अल्पद्रव्याणां मणिवासोगवादीनामेकैकप्रतिग्रहे गायत्र्याष्टसहस्रजपः ॥ ततोल्पत्वे भिक्षामात्रप्रतिग्रहे पुण्यमंत्रानुच्चा
रयेत् ॥ प्रायश्चित्तमिदं सर्वं सति द्रव्ये गृहीतद्रव्यत्यागोत्तरमेव ॥ त्यागश्चाप्सु प्रक्षेपः कस्मैचिद्दानं वा ॥ एकतरनिमित्ते तु
त्यागप्रायश्चित्तयोर्विकल्प इत्याहुः ॥ षोडशमहादानान्यप्यसत्प्रतिग्रहः ॥ एकस्य महादानस्यानेकैः प्रतिग्रहे तु न दोषः ॥ श
स्त्रविषब्रह्मदंडहयरत्नगजतिललोहानां मृतशय्यालंकारवस्त्रादीनां तिलधेन्वाश्च प्रतिग्रहोऽसत्प्रतिग्रहः ॥ नवश्राद्धमा-
सिकश्राद्धगजच्छायासु भोजनं तीर्थे प्रतिग्रहश्च तथा ॥ विद्यातपोहीनेन प्रतिग्रहोपि उत्तमद्रव्यप्रतिग्रहोपि चासत्प्रतिग्रहः

उत्तमत्वं च मूल्यतो वचनाच्च देवविप्रराज्ञां द्रव्यमुत्तमद्रव्यं गोभूसरस्वत्यश्च ॥ छांदोग्ये तु अन्नदधिमधुत्राणगोभूरुक्माश्वगजा
उत्तमा इत्युक्तम् ॥ देवलो रत्नक्षेत्रवेश्महेमकुप्याभरणानि चेत्याह ॥ मृतशय्याप्रतिग्रहे पुनः संस्कारोप्यधिकारः ॥ एवं समुत्कर्षा
नृतेगुरोरलीकनिर्बंधेगुरौ व्यभिचाराद्यभिशापे ज्ञानतः कृतमासं पयसा वर्तनम् ॥ एतदेवाशुचिद्रव्यस्याग्नावंभसि च त्यागे ॥
अमत्या कृच्छ्रं ॥ गुरुविषये तु गुरुं प्रसाद्य कृच्छ्रस्नानाभ्यां शुद्धिः ॥ एतानि स्मृत्यंतरोक्तोपपातकानि प्रासंगिकानि ॥ ॥ इत्य
सत्प्रतिग्रहप्रायश्चित्तानि ॥ ॥ अथ निंदितान्नभक्षणे प्रायश्चित्तम् ॥ ॥ तत्रान्नमदनीयमात्रं ॥ तस्य निंदितत्वं च स्वभावका
लसंपर्कक्रियाभावपरिग्रहैः ॥ तत्र स्वभावाल्लशुनादेः ॥ कालतः पर्युषितादेः संपर्कात् श्वस्पृष्टादेः ॥ क्रियातो हस्तदानादिना व्यंज
नादेः ॥ भावादिक्षुरसादेः ॥ भवति हि कस्यचिदिक्षुरसे भावो मदिरेयमिति ॥ परिग्रहात्पतितान्नादेः ॥ तत्र स्वभावदुष्टलशुनगृं
जनच्छत्राकविड्वराहग्रामकुक्कुटपलांडूनां प्रत्येकममत्या सकृत् भक्षणे सांतपनम् ॥ अभ्यासे यतिचांद्रायणं ॥ मत्या सकृ
च्चेच्चांद्रम् ॥ अभ्यासेन दावृत्तिः ॥ अत्यंताभ्यासे सुरापानसमम् प्रायश्चित्तं तेषु नरुपनयनमेतेषु सर्वत्र ॥ पुनरुपनयने च स्व
ध्यायादिकालापेक्षावपनमेखलादंडभैक्ष्यचर्यादीनि च ॥ अत्र गृंजनं विषदिग्धबाणहतमृगमांसमिति कश्चित् ॥ कलिंजमि-
ति तन्नामेति च प्रांचः ॥ गृंजनं लशुनतुल्यः कंद इति मिताक्षरा ॥ गाजरारव्यं मूलं यदीयं पत्रं गायकाः कंठशुद्ध्यर्थं भक्षयंति विटाश्च
मदार्थं स पत्रविशेषश्चेति माधवः ॥ चरकादिवैद्यकोक्तपलांडुवांतरभेदेषु च्छत्राकादिभेदेकवकादौ च नरगोमांसादौ चैवमेव यो

पा·शो·
३८

ज्यम्॥ एतेषांमुखप्रवेशमात्रे बलात्कारेण भक्षणे चात्वनुपनीते बालेन सकृद्भक्षणे च गायत्र्या अष्टाधिकसहस्रेण मूर्धनि संतत
बिंदुपातेनोपवासेन च शुद्धिः॥ इतरौषधानाश्यव्याधियुक्तस्यैतद्भक्षणे दोषो न॥ अत्रापि पूर्वोक्तसंततजलाभिषेक उपवास-
श्चेति स्मृत्यर्थसारे॥ सर्वत्र तत्काल च्छर्दिते र्धप्रायश्चित्तम्॥ गंधवर्णरसैर्लशुनादितुल्यस्य भक्षणे सांतपनम्॥ यतिब्रतिब्र
ह्मचारिणां तप्तकृच्छ्रादि॥ लङ्वाख्यं पक्षिणं कुस्कंभं वार्ताकं कुंभीतकश्लेष्मातकफलानि कवाक कृष्णसर्षपतंदुलीयकनाली
कानालिकेरीखुरखंडाख्यशाकादिकालिंदं वर्तुलालाबुं च भक्षयित्वा अरण्यकंटकिकुस्कंभरक्तशिग्रुभूस्तृणकोविदारेषु सु
द्रश्वेतकंटकीवृंताकेषु राजसर्षपाख्यशाकोदुंबरपूतिकाखङ्गाख्यशणपुष्पशाल्मलेषु भक्षितेषु अन्येषु च कटुदुर्गंधिक
दमूलफलादिषु भक्ष्याभक्ष्यत्वेन संदिग्धेषु व्रश्चनप्रभवलोहितवृक्षनिर्यासादिषु रेतोविण्मूत्रेषु करनिर्मथितदधि बहिर्वेदि
वाऋत्विजश्चरुपुरोडाशेषु भक्षितेषु च अमत्या सकृच्चेदुपवासः॥ आवृत्तिरभ्यासे॥ मत्या सकृच्च त्रिरात्रं॥ कामतोभ्यासे-
प्राजापत्यम्॥ अत्यंताभ्यासे तप्तकृच्छ्रः पुनरुपनयनं च॥ अन्यथा पतेत्॥ नील्यास्त्वमत्या सकृद्भक्षणे विप्रस्य चांद्रम्॥ अ
भ्यासे मत्या सकृच्चाभ्यासे चावृत्तिः॥ अत्यंताभ्यासे सांतपनम्॥ संधिनीयमसूस्यंदिनीमृतवत्सा अनिर्दशा मेध्यसेविन्य-
न्यवत्सानां गवामनिर्दशाजामहिष्योरेकशफानां च महिषीवर्जितारण्यमृगाणां चाजावर्जितसर्वहिस्तनीनां च क्षीरेषु दधित
त्संभवभिन्नशुक्तेषु चामत्या पीतेषु तेषामत्या पानोत्तरं समनंतरमेव च्छर्दने चैक उपवासः॥ मत्या त्रिरात्रं॥ अमत्याभ्यासे-

३८

च त्रिरात्रम्॥ ज्ञानतो द्विस्त्रिरभ्यासे च्छर्दने च पक्षं गोमूत्रयावकपानम्॥ अत्यंताभ्यासे मासं तत्॥ संधिनी वृषभेणोपजिगमिषुः॥ स्यंदि
नी स्रवत्क्षीरा॥ अविखरोष्ट्रनारीवानरविड्वराहश्वापदक्षीरेषु अमत्या सांतपनम्॥ मत्यातप्तकृच्छ्रः॥ अभ्यासे चांद्रं पुनरुपनयनं च॥ अ
त्यंताभ्यासे सांतपनम्॥ स्त्रियःक्षीरं द्विजः पीत्वा कथंचित्काममोहितः॥ पुनः संस्कृत्य चात्मानं प्राजापत्येन शुद्ध्यति॥ ब्रह्मचारियत्योः
कृच्छ्रस्तप्तकृच्छ्रो वा॥ शुक्तेषु दधितद्विकारश्च भोज्यः॥ शूद्रस्य कपिलाक्षीरपानेन नवाब्दं ब्रह्महव्रतम्॥ विप्रस्यापि हुतशेषातिरि
क्तनत्पाने पशुत्वप्राप्तिः॥ सर्पसरीसृपमूषकमार्जारकृकलासकर्कटनकुलमंडूकशृंगिमयूरवानरकपिश्वगोमायुवृककसिंहव्याघ्रादि
क्रव्याज्जंतुगजाश्वोष्ट्रखरैकशफानामुभयतोदंतानां च काकबकबलाकाहंसगृध्रजालपादचक्रवाकविविष्करपुंडरीककपिंजलभा
सचाषकुक्कुटप्लवचक्रवाककारंडवगृहचटककपोतपारावतखंजनपांडूकशुकसारिकासारसटिट्टिभोलूकश्येनकंकरक्तपादतित्ति
रिकोकिलाहारितमद्गुकलविंकक्रौंचदार्वाघाटादीनां मनुष्याणां जलचरजलपक्षिणां प्राणिभक्षकाणां नरवैर्विदार्यान्नादिभक्षि-
णां मत्स्यादिजंतूनां मत्स्यानां च सूनागतमांसभक्षणे शुष्कमांसभक्षणे च शशकशल्लककच्छपगोधाखड्गव्यतिरिक्तपंचनखमांसभ
क्षणे चैतेषां विण्मूत्ररक्तवसामज्जानां तदुच्छिष्टानां च भक्षणे चामत्याकार्यं॥ अभ्यासे महासांतपनं॥ मत्या तप्तकृच्छ्रो मत्याभ्यासे ना
द्रम्॥ अत्यंताभ्यासे पतनम् तेषां कर्णादिमलषट्कभक्षणे धर्मि[?]निस्मृत्यर्थसारे॥ अमत्या सकृद्भक्षणे एकोपवासः॥ कामतो द्विगु
णम्॥ तथाभ्यासे त्रिरात्रसप्तरात्रद्वादशरात्रपक्षव्रतमासव्रतचांद्रायणान्यभ्यासाधिक्यतारतम्यमालोच्य योज्यानि॥ अभ्यासे-

सर्वत्रव्रतांते एकदिनं घृतप्राशनं पुनः संस्कारश्च॥ समुदिनभक्षणाभ्यासे षाण्मासिकं संवत्सरं चेति प्रांचः॥ एषां ज्ञानतो भक्षणे द्विरगे तु सांतपनं॥ अज्ञानतः प्राजापत्यं॥ अकामतोभ्यासे चांद्रं॥ कामतोभ्यासे षण्मासं॥ अत्यंताभ्यासे सांवत्सरमिति मिताक्षरा॥ एषा केशनखप्राशने अजाविमहिषीमृगाणां मांसभक्षणे मृल्लोष्ठभक्षणे वा मत्या एक उपवासः॥ मत्या त्रिरात्रं॥ एवं कीटपतंगकृमिजलचरास्थिरक्तभक्षणे रक्तवमने चापीति स्मृत्यर्थसारे॥ मांसभांडे पक्कस्यान्नस्याशने त्र्यहं कुशपक्कपयःपानं व्रतिनः केशादेर्मुखप्रवेशमात्रेनप्रघृतं ब्राह्मीरसं वा पिबेत्॥ केशादिभक्षणे तु सद्यः कुशहिरण्योदकसहितघृतप्राशनम्॥ ज्ञानतोभ्यासे त्रिरात्रोपवासो घृतप्राशनं च॥ ब्रह्मचर्यादेर्मधुमांसादिभक्षणेधिकं त्रिरात्रं कार्यं कायं वा पुनरुपनयनं च॥ ततो व्रतसमापनम्॥ अज्ञानतः सकृद्गोमांसभक्षणे कायं॥ ज्ञानतो द्विगुणम्॥ अज्ञानतोभ्यासे चांद्रं॥ समुद्रगानदीतीरे ऽनडुत्सहितगोश्च दक्षिणा॥ ज्ञानतोभ्यासे संवत्सरं॥ अत्यंताभ्यासे पातित्यं॥ कपिखरविड्वराहादिरेतोविण्मूत्रपुरीषाणामन्यतमभक्षणेन्येषां चामेध्यानामेतद्भक्षणे चांद्रं॥ अज्ञानतस्तप्तकृच्छ्रं॥ अभ्यासादावधिकं कल्प्यं॥ पुनरुपनयनं सर्वत्र॥ बलाद्रेतोमूत्रादिपाने प्राजापत्यम्॥ ऊनैकादशवर्षस्याप्येतदेव॥ गोमूत्रपुरीषं मेध्यम्॥ ॥ अथोच्छिष्टाद्यभक्ष्यभक्षणे प्रायश्चित्तम्॥ तत्र काकादिपक्षिश्वापदाखुबिडालनकुलोच्छिष्टे भूयस्यन्नेरसेच केशाद्युपपन्ने द्रवद्रोण्यादौ द्रव्यशुद्धिरहितं चान्ने अमत्या भक्षिते एकाहं ब्राह्मीरसवर्चलापानं॥ मत्या चेत्त्रिरात्रम्॥ माधवीधेनु तिलदर्भोदकैः प्रोक्षणमकृत्वा भोजन एतत्॥ मार्जाराद्युच्छिष्टस्य तथा प्रोक्षणैः शुद्धिस्मरणादित्युक्तं अल्पद्रव्यं चेदमत्याभ्या

सकृच्छ्रं मत्याभ्यासं पक्षं यावकव्रतं ॥ व्रतस्थस्य ब्रह्मक्षत्रियवैश्यशूद्रोच्छिष्टे तु विप्र एकत्रिपंचसप्तरात्राणि क्रमेण पंचगव्यं पिबेत् ॥
अभ्यासे प्येषा मावृत्तिः ॥ मत्या भोजने त्वेतान्येवसोपवासानि कुर्यात् ॥ मत्याभ्यासे कृच्छ्रातिकृच्छ्रतप्तकृच्छ्रचांद्राणि ॥ क्षत्रादौ पाद
पादहानिः ॥ अन्यस्य विप्रोच्छिष्टभोजने सकृदजानतः कृते महाव्याहृतिभिर्मंत्रितपयःपानं ॥ ज्ञानतस्तदभ्यासादौ सांतपनम् ॥ उ
च्छिष्टं चात्रैकपंक्त्युपविष्टविप्रादीनां भोजनमध्ये एकेनापि पात्रत्यागे शेषमन्नं शूद्रादिविषये तद्भोजनोत्तरं पाकपात्रे वशिष्टमप्युच्छि
ष्टं ॥ एवंविध शूद्रोच्छिष्टभोजने त्रिरात्रोपवासो घमर्षणजपः ॥ कामतस्त्वेतद्विषये पंचरात्रं सप्तरात्रं उपवासश्चांद्रं वाभ्यासादितार
तम्येन योज्यम् ॥ गुरुभिन्नविप्रोच्छिष्टभोजने श्वोपहतभोजने कृच्छ्रं भोजनपात्रे भुक्तशेषमन्नोच्छिष्टम् ॥ श्वशूद्रभुक्तशेषभोज
नपात्रे वशिष्टं कामतो भुक्त्वा तप्तकृच्छ्रं कार्यं ॥ अकामतः प्राजापत्यम् ॥ अभ्यासे पराकं चांद्रत्रयं वा ॥ अपत्यभुक्तशेषभक्षणे चां
द्रम् ॥ क्षत्रियवैश्यगर्दभादिभुक्तशेषस्य पात्रावशिष्टस्य भोजने पादोनकृच्छ्रं सार्द्धकृच्छ्रत्रयादि केचित् ॥ भांडस्थेन्ने केशपिपीलि
कामेध्यसेविकीटैरुपहतं तावन्मात्रमुद्धृत्य मृद्भस्मताम्रवैडूर्यहिरण्यरजतादिभिर्गोवालदर्भयुक्तवारिणा शेषं प्रोक्षयेत् ॥ हस्तस्थि
तमेवं भूतं त्यजेत् ॥ मुखस्थं निष्ठीव्य घृतं प्राशयेत् ॥ श्वचांडालरजस्वलासूतिकापतितादिदृष्टान्नमपि मृद्भस्महेमांबुभिः प्रोक्षयेदि
ति मयूखे स्मृतिः ॥ मनुष्यरेतोविण्मूत्रभक्षणे वर्णाः क्रमेण तप्तकृच्छ्रातिकृच्छ्रकास्त्रिरात्राणि कुर्युः मत्या चांद्रतप्तकृच्छ्रातिकृच्छ्र
कायानि पुनः संस्कारश्चोभयत्र ॥ अंत्यजानां भुक्तशेषस्य पाकपात्रावशिष्टस्य भक्षणे वर्णक्रमेण चांद्रमहासांतपनषड्रात्रत्रिरात्रा-

णि॥ अभ्यासे द्विगुणं॥ निरंतरे पतनं भोजनपात्रावशिष्टनदुच्छिष्टभोजने द्विगुणं॥ सहभोजने त्रिगुणं॥ अत्र पुनःसंस्कारो युक्तः॥ म
त्याभ्यासे पतनं॥ कानिचिदुच्छिष्टभोजनप्रायश्चित्तानि प्रकीर्णकप्रसंगे दर्शितानि॥ ॥ अथाशुचिद्रव्यस्पृष्टभक्ष्यभक्षणे प्रा
यश्चित्तम्॥ ॥ तत्र केशकीटनीलीलाक्षास्थिस्नायुचर्मरुधिरविण्मूत्रमांसवसामज्जाशुक्रसुरास्पृष्टस्य महापातकिदृष्टस्य दु
ष्टपक्ष्यवलीढस्य विड्वराहाद्युच्छिष्टस्य गवाघ्रातस्य शुष्कपर्युषितयोश्च वृथापक्वस्य देवपित्र्यान्नस्य होमार्थहविषां चाशने पा
ने चामत्या चेदुपवासः॥ मत्या कृच्छ्रपादोऽल्पसंसर्गे महासंसर्गे त्वर्धकृच्छ्रः॥ तत्रापि संस्पृष्टामेध्यादरसोपलब्धौ तप्तकृच्छ्रः॥ अ
विज्ञातजात्यस्थ्यादिदूषिते कर्णादिमलषट्कदूषिते चार्धम्॥ जलपानसमये मुखनिःसृतं जलं यदि भोजनभाजने पतेत्॥ तदानङ्गा
जनान्नभोजने चांद्रं॥ इदं ज्ञानतोऽत्यंताभ्यासे॥ अकामतोऽभ्यासे सकृत् कामकृते च त्रिरात्रम्॥ सुराभिन्नगौडीमाध्वीमद्यवासित-
शुष्कभांडस्योदकस्याज्ञानतः सकृत्पाने छर्दने त्र्यहं कुशमूलादिपक्वक्षीरपानं॥ तदभ्यासे चैतदेव षड्रात्रं॥ ज्ञानतः सकृत्पंचाहं
शंखपुष्पीपक्वपयःपानम्॥ तथाभ्यासे सप्तरात्रं गोमूत्रयावकपानम्॥ अत्यंताभ्यासे द्वादशाहं ब्राह्मीपक्वपयःपानं प्रत्यहमष्ट
सहस्रगायत्रीजपश्च॥ अच्छर्दनेन जीर्णत्वे एतदेव तत्र तत्र द्विगुणम्॥ एवं भांडस्यार्द्रत्वे पितालादिमद्यभांडस्योदकपाने एतद
र्धम्॥ शुष्कसुराभांडस्योदकपाने एकउपवासः॥ परेद्युर्घृतप्राशनमात्रं॥ तादृशभांडस्य पर्युषितजलपाने छर्दने त्र्यहं शं
खपुष्पीपक्वक्षीरपानं॥ अकामतो द्वित्रिरभ्यासे पंचरात्रं तत्॥ कामतः सकृत्पाने सप्तरात्रं॥ तथाभ्यासे पक्षम्॥ अत्र सर्वत्र जल

पानस्य तपस्त्वाज्जलमल्पं पेयमित्याहुः॥ जीर्णत्वे आर्द्रभांडस्थजलस्य पीतस्य वमने च प्राग्वत्॥ आर्द्रभांडस्थोदकपाने जीर्णे चांद्रं का
मतः॥ अकामतः॥ षडुपवासाः॥ अभोज्यान्नभांडस्थितजलदुग्धदधिपाने ब्रह्मकूर्चः॥ शूद्रस्यात्र सर्वत्र विषये किंचिद्दानमेव॥ अंत
स्थितक्लिन्नमृतपंचनखखरविड्वराहादियुक्तात्यंतोपहतकूपादिजलपाने षडुपवासाः॥ अतिकृच्छ्रो वा॥ व्रतांते पंचगव्याशनं च॥ अ
क्लिन्ने उपवासत्रयं पंचगव्यं चांते॥ शूद्राणां नक्तं॥ इदं ज्ञानतोऽभ्यासे॥ अकामतोऽर्धं॥ प्रांचस्तु अकामतः प्रागुक्तं कामतस्तु द्विगुण-
मित्याहुः॥ तादृक् मनुष्यपशवयुक्तकूपादिजलपाने तु अज्ञानतः सकृच्च षडुपवासाः॥ कामतोऽभ्यासे च पराकः॥ मत्याभ्यासे तप्त
कृच्छ्रः॥ अधिकतराभ्यासे चांद्रं॥ तादृशस्थूलतडागादिजलपाने तु न्यूनं कल्प्यं॥ विण्मूत्रास्थ्यादिदूषितकूपादिजलपाने त्रय उप
वासाः॥ तादृशकुंभस्थजलपाने सांतपनम्॥ इदमज्ञानतः॥ कामतस्तु द्विगुणम्॥ पूर्वोक्तकूपादौ पानव्यतिरेकेण स्नानमात्रे त्वेक
उपवासस्त्रिषवणस्नानं गायत्रीजपश्च॥ चांडालादिखाततडागादिषु जानुदघ्नादल्पपरिमाणजलेषु तथाविधजलास्तु चांडाला
दिकसंपर्कयुतह्रदपुष्करिणीषु चाकामतो जलपाने नक्तम्॥ कामत एक उपवासः॥ अन्त्यखातितचांडालादिपरिगृहीततादृश
कूपादिजलपाने एतदर्धं॥ अभ्यासे कृच्छ्रं॥ कामतोऽभ्यासे द्विगुणं॥ जानुदघ्नह्रदपुष्करिण्यादिषु महाजलाशये च न दोषः॥ तादृ
शकूपे तु विप्रस्य महासांतपनम्॥ क्षत्रियादीनां कृच्छ्रकृच्छ्रार्धपादाः अमत्यार्धं॥ अशक्तः पंचगव्यं पिबेत्॥ चांडालादिभांडस्थ
जलपाने कूपवत्॥ चांडालादेः कूपभांडादिजलस्य पानोत्तरं वमने विप्रस्य कृच्छ्रं॥ रजकाद्यंत्यजखातकूपभांडादिजलतद्भांडस्थ

पयोदध्यादिपानेत्वमत्या द्विजाः क्रमेण ब्रह्मकूर्चपानेनत्रिद्व्येकोपवासान्कुर्युः ॥ शूद्रस्तूपवासं शक्त्यादानं च कुर्यात् ॥ मत्या सर्वत्र
द्विगुणम् ॥ अंत्यजखातवापीतडागादिषु अल्पजलेषु पानादिकरणे एक उपवासो मत्या द्विगुणं ॥ अमत्याभ्यासे कार्यं ॥ मध्यमज
लेषु पंचगव्यम् ॥ महत्सु न दोषः ॥ अत्र सर्वत्र पुनः संस्कार इति केचित् ॥ शूद्रामेध्यसेविकीटादिस्पृष्टान्न भोजने त्वहोरात्रमभोज
नम् ॥ ॥ अथ चांडालाद्यन्न भोजने प्रायश्चित्तं ॥ ॥ तत्र ज्ञानतः सकृच्चांडालाद्यन्न भक्षणे चांद्रम् ॥ अज्ञानतस्तु सकृच्छ्रः ॥
एककाले एकप्रयत्नोपक्रमाणां ग्रासानामेकस्मिन्प्रयोगे भोजनं सकृद्भोजनम् ॥ एवं पुनर्भोजनेऽभ्यासः ॥ वारत्रयेऽत्यंताभ्यासः ॥
एवं सर्वत्र बोध्यं ॥ भवदेवस्तु अज्ञानतः सकृद्भोजनेन सकृच्छ्रं ॥ अभ्यासे चांद्रायणं ज्ञानतो द्विगुण्यमित्याह ॥ सिद्धान्नार्थं ॥ स
कृज्जलादौ शुष्कान्ने ॥ आमान्ने तु तदर्धमात्रं बोध्यम् ॥ बलात् सकृत् शुष्कतदन्न भोजने उपवासत्रयम् ॥ बलात् सिद्धान्न भोज
ने पराकः ॥ ज्ञानाभ्यासे चांद्राभ्यासः ॥ अज्ञानतोऽभ्यासे तप्तकृच्छ्राभ्यासः ॥ चांडालादिपक्वान्नाशने सर्वत्र पुनरुपनयनम् ॥
कामतश्चतुर्विंशतिवारं भोजने पातित्यं ॥ अज्ञानतस्तु तद्द्विगुण वार भोजने तत्र च द्वादशवार्षिकं प्रायश्चित्तम् ॥ यवनम्लेच्छ
यावनानां अन्न भोजनेऽप्येवं ॥ अत्र प्रायश्चित्तेन पापनाशोऽपि वचनादव्यवहार्यता ॥ द्विजस्य ज्ञानात् स्वेच्छया चांडालयवना-
दीनां दासत्वां गीकारे तु प्राजापत्यद्वयम् ॥ पुंश्चल्यभिशस्तम्लेच्छचांडालादीनां बलादेकमासं दासतामापन्नो द्विजो बलात्का
रित गोवधोच्छिष्टमार्जनोच्छिष्टभक्षणतत्स्त्रीसंगादिः प्राजापत्येन शुद्ध्यति ॥ आहिताग्निश्चांद्रेण ॥ संवत्सरोषितस्य प्रा

जापत्यं पराकश्च ॥ शूद्रस्य संवत्सरावासे पक्षं यावकपानम् ॥ मासंवासे कृच्छ्रपादः ॥ मयूरवेतु प्राजापत्यादिकं मासमात्रे गो
वधादौ न प्रातिस्विकं तत्प्रायश्चित्तमकामकृते विहितं कार्यमित्युक्तम् ॥ एवं वर्षपर्यंतं प्रायश्चित्तकल्पना कार्या ॥ चतुर्वर्षपर्यंत
मिति कश्चित् ॥ अग्रे पातित्यात् प्रायश्चित्ताभावः ॥ एतदेव ज्ञानात् शूद्रादिदासत्वांगीकारे ॥ अज्ञानादर्धमित्याहुः ॥ चांडाला
दि स्पृष्टान्नभोजने प्राजापत्यं ॥ ज्ञानतो द्विगुणम् ॥ एतदेव पतितकुणिरजस्वलादिस्पृष्टान्नभोजने ॥ अज्ञानतः सकृच्चां
डालरजस्वलापतितासुच्छिष्टभोजने चांद्रम् ॥ तद्भोजनानंतरं पाकपात्रेवशिष्टमन्नं तदुच्छिष्टम् ॥ ज्ञानतो द्विगुणं ॥ चांडा
लादिभोजनपात्रावशिष्टरूपोच्छिष्टभक्षणे तु प्रकीर्णकप्रसंगोक्तं ज्ञेयम् ॥ क्षत्रियवैश्ययोरापदि बलात्कारेण्नेतरचर्वित
तांबूलाद्युच्छिष्टभोजने चक्रमेण कार्यं कायार्द्धं ॥ विप्रस्य तत्रापि चांद्रमेव ॥ क्षत्रविशोरप्यापदभावेन्नरूपोच्छिष्टभोजने
च चांद्रमेव ॥ सर्वत्रानुच्छिष्टादुच्छिष्टे द्वैगुण्यम् ॥ तत्रापि पाकपात्रावशिष्टोच्छिष्टाद्भोजनपात्रावशिष्टोच्छिष्टे द्विगुणमधिकं वा
कल्प्यम् ॥ तथा च तत् स्पृष्टमात्रात्तत् द्विगुणं तद्धस्तदत्तस्य तद्गृहपक्वस्य वा भक्षणे कल्प्यं ॥ सहभोजने त्रिगुणम् ॥ उच्छिष्टे चतुर्गुणमि
त्यादि बोध्यं ॥ चांडालादिसंसर्गिणोन्नस्य तत्पाकस्य भोजने कृच्छ्रार्धं ॥ शुष्कादौ तदर्धादि चांडालादिस्पृष्टजलक्षीरदध्यादिपाने ल
घुसांतपनम् ॥ एतत्पीतशेषांबुपाने षडुपवासपूर्वकं पंचगव्यपानमज्ञानतः ॥ ज्ञानतो द्विगुणम् ॥ अभ्यासे आवृत्तिः ॥ अज्ञानतः
सकृत् शौंडिकाद्यन्नभोजने मासं गोमूत्रयावकपानं ॥ शुष्कान्ने तदर्धम् षडुपवासा वा ॥ आमान्ने तदर्धं ॥ ज्ञानतो द्विगुणं ॥ अभ्यासे

आवृत्तिः॥ ज्ञानतोऽष्टधा भोजने कृच्छ्राब्दं॥ अज्ञानतस्तथात्वे चांद्रद्वयं ज्ञानादष्टचत्वारिंशद्वारं भोजने पातित्यम्॥ अज्ञानतः षण्णवतिवार भोजने तत्र द्वादशाब्दं॥ ज्ञानतः सकृदेतदुच्छिष्टान्नभोजने विप्रस्य चांद्रम्॥ क्षत्रियवैश्ययोस्तु सप्तकृच्छ्रः॥ एतदर्धमेतत्स्पृष्टमात्रान्न भोजने॥ शुष्कान्नस्योच्छिष्टभोजनेप्येवम्॥ अत्राशक्तः कुशोदुंबरबिल्वाद्यैः पनसांबुजपत्रकैः॥ शंखपुष्पीसुवर्चादिक्काथं पीत्वा तु शुध्यति॥ तत्पीतशेषजलपाने उपवासत्रयपूर्वकं पंचगव्यपानमज्ञानतः॥ ज्ञानतो द्विगुणं॥ अभ्यासे आवृत्तिः॥ गवोच्छिष्टाशने च्छर्दने एकउपवासः पंचगव्यपानंच॥ अभ्यासे उपवासत्रयं॥ चतुर्थे पंचगव्यम्॥ अच्छर्दने ज्ञानतः सकृद्भोजने प्येतदेव॥ मतिपूर्वकाभ्यासे तिकृच्छ्रः॥ केचित्श्वकाकोच्छिष्टे पुनः कृतपाकपर्युषितान्ने स्त्रीशूद्रोच्छिष्टे च अन्ने भुक्ते प्येवमेव प्रायश्चित्तमाहुः॥ प्रपाजलपाने सीरवृक्षनिर्यासाधारपात्रस्थजलपाने नौकाजलनिःसारणीपात्रस्थजलपाने कूपादेश्चर्मपुटकनिःसारितजलपाने च सचैलस्नानपूर्वकमुपवासः॥ अशक्तस्य पंचगव्यपानं॥ आपदि तदेव जलं भूमिष्टं कृत्वा पात्रांतरेणोद्धृतं पेयं प्राणापदि दोषो न॥ शूद्रभांडस्थजलपाने उपोष्य बिल्वपत्रपलाशकुशक्काथोदकपानं॥ नवभांडे तु न दोषः॥ एवं पयोदध्यादावपि अत्र सर्वत्र पुनरुक्तिः॥ प्रासंगिकी वैलक्षण्योक्तिः स्मृत्यंतरानुरोधात्॥ तत्र शक्त्याद्यपेक्षया व्यवस्था॥ शातातपः॥ घृतं तैलं दधि क्षीरं तथैवेक्षुरसो गुडः शूद्रभांडस्थितं तक्रं तथा मधु न दुष्यति॥

॥ अथ भावदुष्टादिभक्षणे प्रायश्चित्तं॥ ॥

तत्र यद्वर्णतआकारतो वा विसदृशतया जुगुप्सितशरीरमलादिभावनां जनयति अरिप्रयुक्तगरादिशंकां वा जनयति तद्भावदुष्टम्

क्षुधार्तश्चनकोभुंक्तेमामकंत्वन्नमेमहि ॥ ब्रूतेव्यर्थाशोयस्त्वेवंनहाग्दुष्टम् ॥ काक्रियास्मिन्निनिर्विनिंद्यदीयतेयत्तच्च ॥ नयोर्भोज-
नेकामतः कृतेत्रिरात्रमुपवासः ॥ गोमूत्रयावकपानमित्यन्ये ॥ अज्ञानतोर्द्धं ॥ छर्दनेघृतप्राशनं ॥ भक्ष्याभक्षलेनशंकितवस्तुभ
क्षणेअक्षारलवणम् ॥ रूक्षांब्राह्मींसुवर्चलांपिबेत् ॥ त्रिरात्रंशंखपुष्पींवापयसासह ॥ कुशपल्योदुंबरपलाशबिल्वपत्रक्वाथंवापि
बेत्शंकायांश्चविज्ञानेद्विगुणम् ॥ अज्ञानतःशंकितभक्षणशुद्ध्यर्थंवर्षांतेत्रीन्द्वावेकंवाकृच्छ्रान्कुर्यात् ॥ ॥ अथकालदुष्टाशने
प्रायश्चित्तम् ॥ ॥ कालदुष्टमस्नेहाक्तपर्युषितादि ॥ मत्यातद्भक्षणेत्रिरात्रंयावकपानम् ॥ अमत्यात्वेकउपवासः ॥ अनिर्दशगोक्षीरा
दिपानेचैवं ॥ यवगोधूमपयोदधिपिष्टविकारेस्नेहपक्वेस्नेहाक्तान्नादौचनदोषः ॥ शृंगास्थिदंतशुक्तिशंखकपर्दजनितपात्रैः कंदशालू
कजैश्चजलंपीत्वानवोदकंचवर्षाकालेत्र्यहादर्वाक् अकालेचदशाहादर्वाक्पीत्वापंचगव्यंपिबेत् मत्योपवासः ॥ ग्रहणकालेनवश्राद्धे
चभोजनेग्रामयाचकान्नभोजनेचचांद्रं ॥ ग्रहणनिमित्तनिषिद्धकालेसंधिकालेतिप्रातरतिसायंकालेचभुक्त्वाशत्रौधानादधिसक्तु
तिलसंबद्धान्नभोजनेएवमादिष्वनादिष्टप्रायश्चित्तेषुप्राणायामशतम् ॥ मत्योपवासःअमत्योपवासइत्यन्ये ॥ ॥ अथगुण-
दुष्टभोजनेप्रायश्चित्तं ॥ ॥ शुक्तानिकषायादींश्चअन्यान्यमेध्यानिचामत्यापीत्वाभुक्त्वाचोपवसेत् ॥ मत्यात्रिरात्रंयावकं ॥ आम
लकयुक्तकांजिकायांनदोषोभिघारणेच ॥ शुक्तंकालवशादम्लतांगनम् ॥ उद्धृतसारपिण्याकमथितादिभक्षणेमत्यात्रिरात्रंया
वकं ॥ अमत्यार्द्धं ॥ छर्दित्वाघृतंपिबेत् ॥ वैश्वदेवादिरहितान्नभोजनेअतिथिदेवनादिप्रयोजनमनुद्दिश्यदृथापक्वस्यकृसरसंया

वकपायसापूपशष्कुलीमधुमांसादिभक्षणेष्वमत्योपवासः॥ मत्यात्रिरात्रं यावकं॥ कायमभ्यासे॥ आहिताग्निस्त्वमत्यात्रिरात्रं
॥ मत्याकायंकुर्यात्॥ हस्तदानादिक्रियादुष्टस्यामत्याभोजनेनक्तम् मत्यातूपवासः पंचगव्यंच॥ तत्रमाक्षिकमिक्षुरसविशेषरूपं
फाणितंशाकंगोरसलवणघृतानिहस्तदत्तानिदुष्टानिअमत्याभ्यासेतूपवासः॥ मत्याभ्यासेत्रिरात्रं॥ अत्यंताभ्यासेसांतपनम्॥
॥ अथश्राद्धभोजनेप्रायश्चित्तम्॥ ॥ तत्रांतर्दशाहेनवश्राद्धानि॥ एकादशाहश्राद्धमारभ्योनाब्दांनानिषोडशैकोद्दिष्टा-
निनवमिश्राणि॥ सपिंडीकरणंमिश्रंनततः पराणिपुराणानि॥ तत्रनवश्राद्धभोजनेकार्यं॥ अनापद्यत्रचांद्रम्॥ एकादशाहेम
हैकोद्दिष्टेप्येवं॥ पादोनंकायमापदि॥ अनापदितुचांद्रकायंचेत्यन्ये॥ द्वादशाहेआद्यमासिकेचोनमासिकेच पादोनंकायमे
व॥ अत्रानापदिकायं॥ अन्येपराकमाहुः॥ द्वितीयमासिकेत्रैपक्षिकमासिकेऊनषाण्मासिकेऊनाब्देचार्धकृच्छ्रम्॥ अनाप
दिपादोनम्॥ त्रिमासाद्यब्दमोक्षांतेषुसपिंडनेचाब्दिकेचोपवासः पादकृच्छ्रोवा॥ अनापदितुत्रिरात्रंकृच्छ्रार्धंवा॥ अन्येत्व
नापदित्रैपक्षिकेतिकृच्छ्रः॥ षाण्मासिकेकृच्छ्रः॥ आब्दिकेआपदित्रिरात्रंगोमूत्रयावकपानं॥ अनापदिकायपादमित्याहुः
॥ तदुत्तरंमत्याब्दिकेत्रिवर्षपर्यंतंनक्तं॥ अनापदीतूपवासः॥ गुरुविप्राद्यर्थकद्रव्यार्थेनवश्राद्धभोजनेत्रिरात्रम्॥ महैकोद्दिष्टे
द्वादशाहादौचत्रिरात्रम्॥ द्वैमासिकादौउपवासः॥ त्रिमासादौनक्तंपंचगव्यंच॥ मत्याब्दिकेन्यपुराणेषुच षट्प्राणायामाः॥
वृद्धौत्रयः प्राणायामाः॥ तत्रैवनिस्पृहस्यभोक्तुर्जपशालिनोवानदर्धम्॥ क्षत्रियादिश्राद्धेषुद्वित्रिचतुर्गुणानिक्रमात्कार्याणि

निस्मृत्यर्थसारे ॥ अन्यत्र तु श्रावणश्राद्धे षट् प्राणायामाः ॥ त्रिमासादिवत्सरांतमुपवासः ॥ सपिंडनश्राद्धे च आद्यमासिके पा
दोनकृच्छ्रः ॥ त्रैपक्षिके तदर्धम् ॥ द्वैमासिके पंचगव्यपानं च ॥ प्रत्यब्दं नक्तं इदमापदि ॥ अनापदि तु द्विगुणमिति ॥ चांडालोदक
सर्पविप्रपशुदंष्ट्रिविद्युत्पानपतनविषोद्बंधनानाशकैर्मृतानां स्तेनपतिताद्यभोज्यान्नानां च नवश्राद्धेषु चांद्रम् ॥ प्रथममासिके
चांद्रं पराकश्च ॥ द्वादशाहादौ पराक एव ॥ द्विमासत्रिपक्षादावतिकृच्छ्रः त्रिमासादौ कायं ॥ आब्दिके पादकृच्छ्रः ॥ द्वितीयव
र्षादावुपवासः ॥ सम्यग्विषयेपि द्रव्यार्थं भोजनेप्येवमेव ॥ अपांक्तेयानामेकादशाहश्राद्धभोजने शिशुचांद्रम् ॥ यतिव्रतिब्र
ह्मचारिणां तु प्रथममासिकादिषु नवश्राद्धे सूतकान्नस्य च भोजने उक्तं कृत्वाधिकत्रिरात्रोपवासं प्राणायामत्रयपूर्वकं घृत-
प्राशनं च कृत्वा व्रतशेषसमापनं ॥ अनापदि तु कायम् त्रिरात्रोपवासो द्वादशप्राणायामाः पंचगव्याशनं चाधिकम् ॥ कामतो-
भोजने पुनरुपनयनमित्यन्ये ॥ अभ्यासे तूक्तकृच्छ्रादि द्विगुणं ॥ आमहेमसंकल्पितश्राद्धेषु तत्तदर्धानि ॥ गुरुविषये तूपवा
सो नक्तं षट्त्रिंशत्प्राणायामाश्च ॥ अतिश्रोत्रियादिपुराणश्राद्धेषु अनुक्तप्रायश्चित्तेषु सर्वश्राद्धेषु च गायत्र्या दश कृत्वापः
पीत्वा शुध्यति ॥ ततः संध्योपासनहोमादि यथोचितं कुर्यात् ॥ वृद्धिश्राद्धे प्राणायामत्रयम् ॥ चौलनामकरणजातकर्मांगश्रा
द्धेषु चूडाहोमांते च सीमंते सोमे चाधानांगब्रह्मौदने चामत्यापदि च भुक्तौ सांतपनम् ॥ मत्यापदि चांद्रं ॥ अन्यसंस्कारेषूपवा
सः ॥ अनापदि त्रिरात्रं ॥ अन्यदत्ता कन्यान्यस्मै पुनर्दत्ता या सा पुनर्भूः ॥ असंस्कृते पूर्वगर्भे प्रसूते सति द्वितीयगर्भे संस्कारो

यस्याः सापुनरेता ॥ ऋत्वादिषोडशाहात्सश्वाद्वेयागर्भिणीसारेनोधा ॥ भर्तृशासनोल्लंघिनी कामचारिणी ॥ आसां गर्भेषुसु
स्त्रीपूर्ववत्सांतपनंचांद्रंवा ॥ सर्वस्त्रीप्रथमगर्भेषुचैवम् ॥ अनि. र्दशाहनवश्राद्धेकामतोभुक्तवतोविप्रस्यानापदिसंवत्सरपर्यं
तंभोजनात्प्राक्संहिताध्ययनमितिकेचित् ॥ ॥ अथपरिगृह्याशुचिदुष्टभोजनेप्रायश्चित्तानि ॥ ॥ तत्रराजपुरोहितराज
भृत्यवैश्यशूद्राणांक्लीबाजाविकमाहिषिकस्थानिकभूपालानांस्तेनगायकलक्षकवार्धुषिकदीक्षावस्थितानांकदर्यबद्धाभिशस्त
पुंश्चलीदांभिकवैद्यनटनर्तकगणकानांभग्नवृत्तिस्त्रीसदृशचेष्टितनिराचारनिषिद्धाचाराणामाचार्याग्निगुरुधर्मशास्त्रगोब्रा
ह्मणादिद्वेषिणांसंवत्सराभ्यस्तोपपातकानांचर्मकारस्वर्णकारशौंडिकव्याधपुनर्भूजातभ्रूणघ्नविषकारशस्त्र कारलोह
काराणांमत्तोन्मत्तकुद्धातुरगणगणिकानांश्वचक्रमद्यस्त्रीमृगजीविनामश्वरथगजारोहणवृत्तीनामुच्छिष्टभोजीक्रूरोग्रप
तितपिशुनानांरजकनिर्णेजकैवर्त्तकानांशूद्रयाजकाध्यापकचित्रकारशिल्पिब्रह्मविक्रयिणांवृथाश्रम्यनाश्रम्याश्रमभे
दिनामपण्यविक्रेतृसोमलतानाविक्रेतृशैलूषतंतुवायतुन्नवायकिरातानांयतिब्रह्मचारिणोर्व्रात्यतद्याजकादीनांनित्यरो-
गियोनिसंकीर्णसंकरजातिकुंडगोलकनदन्नाशिनांघाटिकविप्रगोदेववृत्तिघ्नानांमरिदेवनसंबंधिनांगरदसूपकारवैणवो
पजीविपाखंडिलिंगानांसूतादिप्रतिलोमजानांकर्मारकृतघ्नोग्रदंडपातिनांपुण्यसोमयागात्मविक्रयिणांअनृतवादिद्वेषिहे
मकाराणांवृक्षारोपणवृत्तीनांकूटकृत्वृषलीतत्पतितत्संबंधिनांतूर्यादिस्वनव्यतिरिक्तकरणैर्नृपतिप्रबोधकानांकितवमृग

याजीविनिषादतक्षकर्मकृतांमूल्येनद्विजकार्यकर्तृणांप्राणिवधजीविलोकायतिकदेवलकस्त्रीजितकुष्ठिकुनखिश्यावदंतानां
पित्रादिविवदमानस्यनद्यादिसंतरणजीविग्रामयाजकनत्पुरोहितवणिजपशुमारकदुर्लोमसेवककांडपृष्ठानांपर्याहितप
रीष्टपुनर्भूअग्रेदिधिषुपतितज्ज्ञातानांचक्रितौलिकपक्षिरक्षकसमुद्रतारकहीनांगातिरिक्तांगानामपुत्रकानग्निकमुमूर्षूणां
पतिपुत्ररहितस्त्रियाःपंचयज्ञानकृत्वानित्यपरान्नभोजिविरूपपरपाकनिरतस्यपंचमहायज्ञकरणंविनाभोजनरूपपरपा
कनिवृत्तस्यापंचसंज्ञकज्ञानवर्जितग्रहस्थस्याचार्यपितृमातृसुतगुर्वग्नित्यागिनांसुतकन्यास्त्रीसत्यविक्रयिणांगृहस्थि-
तोपपत्तिकज्ञातोपपत्तिकस्त्रीपरिग्रहिणोद्यूतजीविविधिनिषेधातीतसूतकिकुलालानांचतुःषष्टिपलान्नभक्षकरूपकुंडा-
शिनःकांस्यसीसादिकारवाद्योपजीविभांडवस्त्रादिकर्तृपश्वादिविक्रयिमहर्षिविक्रयिणांताम्रादीनांस्वर्णादिसदृशरूपक-
र्तृणामित्यादिपापिनामेषांमार्गेतिष्ठतांभिक्षान्नप्रतिग्रहेचांद्रायणम्॥एतेषांकृतनिष्कृतीनांमुख्यतस्तत्तद्वस्तूपजीविनां-
चान्नभोजनेदानेयाजनेप्रतिग्रहेचैवम्॥एतच्चतत्तद्वस्तूपार्जितधनत्यागपूर्वकमेव॥कुनखिकृष्णदंतकुष्ठिप्रभृतीनांचप्रागु
क्तानांविप्रान्नदशूद्रस्यशूद्रान्नदविप्रस्यास्वामिकशूद्रस्याप्रसूतायादुहितुश्चान्नभोजनेशिष्टजुगुप्सितान्नस्यमहापापिवी
क्षितस्यश्वादिस्पृष्टस्योदक्यादिदृष्टस्यगवाघ्रातस्यपक्ष्यवलीढस्यासंस्कृतस्यबहुयाचितस्यसरोषसविस्मयदत्तस्यपाद
स्पृष्टस्यावज्ञातस्यानर्चितदत्तस्यातुष्टिकरस्यचान्नस्यभोजनेचामत्यात्रिरात्रं॥अमत्याभ्यासेकृच्छ्रः॥मत्यानिकृच्छ्रः॥मत्या

भ्यासे तत्सकृच्छ्रः॥ब्रह्मचर्यादेः कायानिकृच्छ्रतप्तकृच्छ्रचांद्रायण्य मत्यादिषुक्रमेणपुनः संस्कारश्च॥ यद्वात्रिषट्नवद्वादशरात्रा
णि पयसा भूयोभ्यासेचांद्रम्॥ अत्यंताभ्यासेचांद्रवृद्धिः॥आपदि एकद्वित्रिचतुरुपवासाः॥ अत्यंतापदि त्रिषट्नवद्वादशप्रा
णायामाः॥ आमान्नेषुस्नानम्॥एतद्वृत्तिविमान्नभोजनेएकभक्तम्॥ अनाचारेदुष्टाचारेनक्तम्॥ब्राह्मणाब्रुवेस्नानमष्टशत
जपश्च॥ एवंशारवारंडान्नस्यब्राह्मणादिसंघाताद्युपदेशत्यक्तादिरूपस्यानेकस्वामिकरूपस्यवागणान्नस्यकोभुंक्तेत्यादि
स्मयादिनादीयमानदुष्टान्नस्यनगरमधुकराद्यन्नस्यासन्मानंगुणिनांसन्मानंपापकर्मणांकुरुतेयस्तदन्नस्यचभोजनेप्राग्व
देव॥आचारेंदुशेखरेभोजनप्रकरणेगणिकाद्यभोज्यान्नभक्षणेचैवमित्युक्तम्॥ ॥अथजातमृताशौचान्नभोजने
प्रायश्चित्तम्॥ ॥द्विजाशौचेसवर्णानामुपवासस्त्रिरात्रंवा॥विप्रक्षत्रियवैश्यशूद्राशौचेषुअमत्याविप्रोभुक्त्वानक्तैं
कद्वित्रिरुपवासान्कुर्यात्॥ अभ्यासेत्वेकत्रिपंचसप्तोपवासाः॥ यद्वाभ्यासेद्वात्रिंशत्षष्टिशतंप्राणायामाः॥उपवासैःप्राणा
यामानांसमुच्चयइत्येके॥अन्येत्वापदिअज्ञानतएवासकृत्भोजनेएवैतत्॥ अभ्यासेत्वधिकमित्याहुः॥ मत्याचेत्कायसांतपन
महासांतपनचांद्राणि॥एकद्वित्रिचतुःकायानिवा॥ मत्याभ्यासेकायानिकृच्छ्रतप्तकृच्छ्रकृच्छ्रचांद्राणि॥कामतोभूयोभ्यासेए
कद्वित्रिषण्मासेषुक्रमेणयावकव्रतम्॥अत्यंतापदिमत्याभ्यासेविप्रायुक्तप्राणायामाएव॥अज्ञानात्भुक्तौछर्दनेचानापद्य
पि अष्टविंशतिशतपंचाशताष्टसहस्रगायत्रीजपोवाबोध्यः॥द्विजाशौचेशूद्रस्यभुक्तौस्नानम्॥ शूद्राशौचेशूद्रस्यस्नानंपंच

गव्यंच ॥ आशौचिविप्रस्पृष्टपानीयपाने पंचगव्यमज्ञानतः ॥ ज्ञानतश्चेदुपवासः ॥ ब्रह्मचर्यादेरुत्ताने पंचगव्यमुपवासश्च
॥ प्रत्यहं सहस्रजपश्चत्रिरात्रम् ॥ जाताशौचा आहिताग्न्याशौचे चलघुसर्वं योज्यं इत्येके ॥ आशौचे भुक्तवंतं न स्पृशेदापुरीषो
त्सर्गात् ॥ इदं च प्रायश्चित्तं तद्वर्णानामाशौचव्यपगमे कार्यं ॥ तावदाशौचान्नभोजिनोप्याशौचात् ॥ एतच्चाशौचिस्वामिकान्न
भोजन एव ॥ आशौचिस्पृष्टाशौचिस्वामिकान्नभोजने तु न तत् प्रायश्चित्तद्वय समुच्चयइत्यन्यत्र विस्तरः ॥ आशौचिगृहेन्य
दीयान्नभोजनेपि नक्तमुपवासो वा प्रायश्चित्तम् ॥ अथ कापालिकान्नभोजने तज्जलपाने चकृच्छ्रमात्कायतदर्धं च ॥ अभ्यासे
द्विगुणं ॥ मत्याभ्यासे चतुर्गुणम् ॥ तत्स्त्रीगमने चैवम् ॥ अत्यंताभ्यासेब्दकृच्छ्रं ॥ अन्नसत्रप्रवृत्तस्याग्निहोत्रिणश्चाशौ
चवत्वेपि तद्दीयामान्नेषु दोषो न तयोः पक्वान्नग्रहणे तु क्रमेणैकरात्रम् यावकव्रतं द्वादशचतुर्विंशतिः प्राणायामा वा ॥ पक्षे
मासे वा देवपितॄन भोजयतोन्नाशने चांद्रं ॥ पतितगृहवासान्नभोजनप्रतिगृहेषु ज्ञानाभ्यासे मासोपवासाः ॥ अज्ञानाभ्या
से चांद्रम् ॥ पूर्वगणितव्यतिरिक्तनिषिद्धाचरणशीलानामन्नभोजने तूपवासः ॥ वत्सराभ्यासे पराकः ॥ उक्तातिरिक्तनिषि
द्धमूलफलपत्राद्यशने उपवासः ॥ ॥ इति निंदितान्नादनप्रायश्चित्तानि ॥ ॥ अथ नटादिकर्मकरणे ॥ ॥ वशीकर
णोच्चाटनादिरूपेभिचारे शक्तौ सत्याम पालनरूपे विना कारणं गृहाग्निप्रकाशने संभोगादित्यागरूपे च भार्यात्यागेपि उपपा
तकसामान्यप्रायश्चित्तानि शक्त्याद्यपेक्षया योज्यानि ॥ अत्रोपपातकप्रायश्चित्तेषु यथोपदिष्टं विप्रस्यैव ॥ क्षत्रियस्यपा

दोनं ॥ वैश्यस्यार्धं ॥ शूद्रस्य पादम् ॥ तत् स्त्रीणां तदर्धं ॥ रजस्वलानां तत्र तत्रोक्तमेव कार्यं ॥ ॥ इत्युपपातकप्रायश्चित्तानि समाप्तानि ॥ ॥ अथ महापातकेषु तत्रादौ ब्रह्महत्याप्रायश्चित्तम् ॥ ॥ तत्र ब्राह्मणत्वप्रकारकज्ञानपूर्वकं मारणकामनया ब्राह्मणवधे मरणादेव शुद्धिः ॥ तच्चात्मनोग्निप्रवेशनेन भृगुपतनेन वा ॥ अथवा ब्रह्महत्यापापशुध्यर्थं बाणलक्षीभूतोयमिति जानतां धनुर्भृतां युद्धभूमौ स्वेच्छया लक्ष्यभवनेन ॥ अत्र तादृशो बहुप्रहारार्त्तो मृतकल्पो भवन् यदि पुनर्जीवेत्तदापि शुध्यति ॥ मरणांतं प्रायश्चित्तं क्षत्रियादेरेव विप्रस्य तु तत्तद्वक्ष्यमाणं प्रायश्चित्तं द्विगुणं कार्यं इति मिताक्षरा ॥ अज्ञानतो निच्छया वाकृतेषु ब्रह्मवधे हतविप्रशवशिरोध्वजहस्तस्तत्कपालालाभे गृहीतान्यदीयकपालो स्वकर्म रव्यापयन् ब्रह्मचारिधर्मवान् त्रैवर्णिकाचार्यादिदर्शने मार्गादपक्रमन् त्रिषवणस्नायी अध्ययनाध्यापनादि षट्कर्माणि वर्जयन् समंत्रकं स्नानसंध्योपासनमात्रं कुर्वन् रात्रौ वीरासनी जटी मुंडो वा वन्यफलमात्राहारी तदभावे त्वसंकल्पितनविधूमभुक्तवज्जनसप्तागारेष्वेव भैक्ष्यं मृत्पात्रेण चरन् क्षमी दांताचारः कंबलक्षौमशयानो चीरवल्कलान्यतमवासा बहिर्ग्रामाद्देवालयादिसमीपवासी विप्रगृहाण्यप्रविशन् द्वारादेव तत्तद्गृहान्नमस्कुर्वन्नेककालाशी भिक्षाया अलाभे उपवसन् द्वादशवर्षाणि क्षपयेत् ॥ ध्वजश्च शवनिर्हरणार्थरवट्वांगस्येव ॥ एतदशक्तौ षष्ट्युत्तरत्रिशतधनेवस्तन्मूल्यं वा हेमरौप्यान्यतरस्य षष्ट्युत्तरत्रिशतनिष्कानि ॥ अत्राशक्तौ तावत्संरव्यान्यर्धनिष्कानि पादनिष्कानि वा ॥ अत्रांते शतं दश वा गावो दक्षिणा विप्रभोजनादीति केचित् ॥

पितृमातृसोदरगुरुश्रोत्रियाहिताग्न्याचार्यादिविप्रवधे तु मरणपर्यंतमेतदेवव्रतम् ॥ भिक्षाशनं च लोहितशरावेणेति ॥ अ
त्रगोसहस्रादिकं द्वादशाब्दमित्यन्ये ॥ द्वादशाब्दव्रतमध्ये चोरव्याघ्रादिहन्यमानस्य ब्राह्मणस्य तादृशगवां द्वादशकस्य वार
क्षणे हि जानृ विज्ञाप्याश्वमेधावभृथस्नाने वा सद्य एव शुद्धिः ॥ प्रक्रांतव्रतमध्ये मरणेपि तावतैव पापक्षयः एवं व्रतमध्ये गोवि
प्रार्थ्यमानपरित्यागे तत्सर्यं तं व्यापारं कृत्वा जीवनेपि वा सद्य एव शुद्ध्यति ॥ यद्वा व्रतमध्ये कुष्ठादिदीर्घतीव्रव्याधिग्रस्तं विप्रं गां
वा औषधैः सरक्ष्य तदैव शुद्ध्येत् ॥ एवं व्रतमध्ये चोराद्यपहृतविप्रधनार्थं तैः सह युद्ध्वा तद्धनस्य विप्राय प्रापणे तन्निमित्तमरणे
वा बहुशस्त्रक्षतस्य मृतकल्पस्य तेस्य कस्य धनानयनं विनापि जीवनेपि वा सद्य एव शुद्धिः ॥ नत्वग्रे पुनर्व्रतकरणं ॥ इदं चाम
त्यानिच्छया वा निर्गुणं विप्रं हंतुर्ज्ञेयम् ॥ प्रक्रांतव्रतक्षत्रियस्य जातिमात्रविप्रस्य च कामतः सगुणे नवधे कृते द्वादशाब्दं कार्यम्
॥ अज्ञानतः षडब्दं ॥ मितहविष्याशिनः शाखां तं त्रिवेदसंहिता ब्राह्मणपारायणं वा ॥ पूर्वमेवाहिताग्नेः कृतप्रक्रांतयज्ञस्य वि
श्वजिदभिजित्त्रिवृदग्निष्टुतामन्यतमयागकरणं वा ॥ विंध्यांतरवासिना तु निर्गुणेन सगुणे नवा जातिमात्रनिर्गुणविप्रवधे
विकर्मवर्जितं चातुर्वर्ण्यात् पथि भिक्षां कुर्वता छत्रोपानद्वर्जितेन गोकुलगोष्ठग्रामतपोवनतीर्थादिषु स्वकर्म ख्यापयन् समुद्र
सेतुदर्शनस्नाने कृत्वा विप्रेभ्यो भोजनवस्त्रपवित्रादि देयं अत्र गोशतं दक्षिणा ॥ जातिमात्रविप्रस्य वेदाभ्यासादिहीनेन धनव
नावधे वेदवित्संप्रदानं जीवनपर्याप्तभूम्यादिधनदानम् ॥ द्वादशवर्षोपभोग्यद्रव्यसहितगृहदानं ज्ञाता वत्सर्वस्वदानं वा ॥ अ

शक्तौ ऽ उत्तरोत्तरम् ॥ अत्र प्रतिगृहीतुर्वैश्यान्नरेष्टिरनाहिताग्नेर्वैश्वानरश्चरुः प्रायश्चित्तम् ॥ अज्ञानतः सोमयागदीक्षितब्राह्म-
णवधे चतुर्विंशतिवार्षिकमुक्तं व्रतं गोसहस्रद्वयं वा ॥ आचार्यादिवधेऽप्येवं ॥ गोसहस्रसहितं द्वादशाब्दमित्यन्ये ॥ अतिगुण
वतो गुणहीनस्याज्ञानतो वधे पूर्वोक्तं व्रतं वर्षं कृत्वान्ते रत्नहेमगोधान्यतिलदधिघृतदानं ॥ मत्यादौ द्विगुणादि ॥ ज्ञानतो ब्राह्म-
णज्ञातीयषंढवधे शूद्रवधव्रतम् ॥ अज्ञानतस्तद्वधे गंगायमुनासंगमे त्रिषवणस्नायी त्रिरात्रोपवासेन शुद्ध्यति ॥ पतितब्रा-
ह्मणवधे त्रिवर्षं प्रत्यहं प्राणायामशतपूर्वकं गायत्रीजपपूर्वकं च वने भिक्षाशनमंते षोडशविप्रभोजनं च ॥ अनुपनीतविप्रव
धे निर्गुणविप्रवधोक्तं षडब्दं ॥ अनुपनीतत्वेन तस्य निर्गुणत्वात् ॥ अविज्ञातस्त्रीपुंस्त्वादिकस्य ब्राह्मणगर्भस्य वधे तु द्वा
दशाब्दम् ॥ विज्ञानतस्त्रीत्वादौ तत्तत्प्रयुक्तम् अत्रैकप्रयत्नकृतानेकविप्रवधेऽप्येकमेव प्रायश्चित्तं तंत्रेण ॥ तंत्रत्वं च समान
देशकालकर्तृत्वेनागृह्यमाणविशेषत्वम् ॥ अनेकप्रयत्नकृते तु नानावधे प्रायश्चित्तावृत्तिस्तृतीयविप्रवधपर्यंतं ॥ चतुर्थे तु
विप्रवधे प्रायश्चित्ताभावः ॥ केचिदामरणमुक्तप्रायश्चित्ताचरणमित्याहुः ॥ बहुभिरेकविप्रस्य वधे यदीयप्रहारेण मरणं सं
प्लाक्षप्रस्रवणादारभ्य पश्चिमोदधेः प्रतिस्रोतः सरस्वतीं गच्छेत् ॥ अन्ये षण्मासान् कृच्छ्रान् चरेयुः ॥ निरस्तकृतनिर्गुणविप्र
स्य क्रोधात् विषशस्त्रादिनिर्गुणोपरि मरणे त्रैवार्षिकं तत् व्रतम् ॥ निमित्तिनो गुणवत्त्वे त्वब्दं गृहक्षेत्रादिसंबंधे निर्गुणमर-
णे सगुणस्यापि त्रैवार्षिकमेव ॥ सगुणस्य तथा मरणे तु द्वादशाब्दमेव ॥ यदा त्वाक्रोशताडनादिसंबंधमन्तरेण भ्रांत्यादि व

शात् परमुद्दिश्य विप्रस्यात्महननेतु हंतुरेवदोषोनोद्दिश्यस्य ॥ तथायत्राकुष्टोपिमरणादर्वाक्धनदानादिनातोषितउच्चैः श्रावयति
नाक्रोशकस्याऽपराधइतिसोप्यदोषः ॥ अथानुग्राहकादीनांतत्रसाक्षादनुग्राहकः ॥ कर्तुर्द्वादशाब्दंचतुर्विंशत्यब्दषडब्दादिय
त्प्राप्नुयात्तत्पादोनंचरेत् ॥ प्रयोजकोऽर्धम् ॥ अनुगतासार्धपादम् ॥ निमित्तकर्त्तापादंचरेत् ॥ अत्रचनिरस्कृनेत्याद्यनुपा
दोक्ताव्यवस्था ॥ निमित्तकर्तुरुक्तैव ॥ अनुग्राहकप्रयोजकादीनामपियेनुग्राहकप्रयोजकादयस्तेषामपिप्रायश्चित्तंकल्प्यम्
तथाप्रोत्साहकादीनामपिदंडप्रायश्चित्तेकल्प्यंप्रोत्साहकः सहायश्चनथामार्गानुदेशकः आश्रयःशस्त्रदाताचभक्तदाता-
विकर्मणाम् ॥ उपेक्षकःशक्तिमांश्चेद्दोषवक्तानुमोदकः ॥ यएवम्रियमाणंतुब्राह्मणसमुपेक्षते ॥ अकार्यकारिणांत्वेषांप्रायश्चि
त्तंप्रकल्पयेदिति ॥ कस्मिंश्चिद्ब्रह्मवधेप्रयोजकस्यान्यस्मिन्साक्षात्कर्तृत्वेएकस्यगुरुलघुप्रायश्चित्तसन्निपातस्तत्रद्वादश
वार्षिकादिगुर्वतःपातिनःप्रयोजकादिलघुप्रायश्चित्तस्यप्रसंगादिसिद्धेर्नपृथगनुष्ठानंअग्निदगरदशस्त्रपाणिधनापहा
रिक्षेत्रहरदारहारकःशापोद्यतआथर्वणाद्यभिचारैर्हंताराजगामिपैशुनकर्ताचैतेवर्तमानतत्त्वापाराआततायिनः एषामग्नि
विषशस्त्रादिहरणमात्रेणानिवारणसंभवेयदितद्वधःक्रियतेतदानत्तद्वधनिमित्तंप्रायश्चित्तंभवत्येव ॥ अशक्यनिवारणेतुगो
विप्रादीनामप्येषांहननादाद्युद्यतानांवधेदोषाभावः ॥ क्षत्रियादीनांब्रह्मचारिवनस्थयतीनांचक्रमेणद्विगुणंत्रिगुणंचतुर्गुणं
चप्रायश्चित्तम् ॥ केचित्तुक्षत्रियवैश्यशूद्राणांकामतःप्रवृत्तावेतद्विषयेमरणमेवतत्त्वसर्वस्वदानपूर्वकंमुंडितसर्वांगस्यक

रीषाग्नावेव॥ अकामतस्त्वामरणंमहाव्रताभ्यास इत्याहुः॥ यत्तु यथोक्तंप्रायश्चित्तंविप्रस्यैवक्षत्रियस्यतत्पादोनंवैश्यस्यार्धम्॥ शू
द्रस्यपादमिति स्मृत्यंतरे उक्तं॥ तत्प्रातिलोम्यानुष्ठितमनुष्यवधचौर्यपारदार्यपारुष्येति चतुर्विधसाहसव्यतिरिक्तपापविषय
म्॥ बालवृद्धस्त्रीणामर्धम्॥ ब्रह्मचारिणोपिषोडशवर्षात्पूर्वंबालत्वादर्धम्॥ षोडशवर्षादूर्ध्वंतस्यद्विगुणम्॥ अनुपनीत
बालानामनूढस्त्रीणांच पादमेव॥ विप्रात्क्षत्रियायांउत्पन्नोमूर्धावसिक्तस्तस्यक्षत्रियन्यूनमध्यर्धद्वादशाब्दम्॥ एवमनु
लोमेषुसर्वत्रन्यूनत्वमूह्यम्॥ प्रतिलोमोत्पन्नानामनयैवदिशाप्रायश्चित्ताधिक्यमप्यूह्यम्॥ साग्निकस्याज्ञानात्महापा
पेतदग्नीन्पुत्रादयअप्रायश्चित्तं पालयेयुः॥ ज्ञानाच्चेदग्नीनप्सुप्रक्षिप्य मरणांतं प्रायश्चित्तम्॥ आत्मघातेतुतत्पुत्रादयोमृ
तजातीयवधप्रायश्चित्तंसमुचितंतप्तकृच्छ्रद्वयंचांद्रंकुर्युः॥ आत्मघातादिपापिनांशवस्पर्शालंकरणवहनदहनश्रुपातास्थि
संचयदशाहक्रियादिकमज्ञानतः कृत्वामनूक्तंतप्तकृच्छ्रंद्वादशाहं॥ ज्ञानतोद्विगुणं॥ तप्तकृच्छ्रसहितंचांद्रंवा॥ एषुस्पर्शाश्रु
पातभिन्नेष्वेकैककरणेतुज्ञानतः सप्ताहसाध्यंसांतपनतप्तकृच्छ्रंवा॥ अज्ञानतोमासंभिक्षाहारस्त्रिषवणस्नानंच॥ स्पर्शाश्रुपा
तयोस्तु प्रत्येकमेकोपवासः॥ मत्याभ्यासेकृच्छ्राणि कृच्छ्रचांद्रादियोग्यतया योज्यम्॥ आहिताग्नेश्चैतादृशस्यलौकिकाग्निना
दाहोऽमंत्रकः दाहकर्तुः प्राजापत्यमात्मघातादिप्रायश्चित्तं पुत्रादिः कृत्वास्थीनिविधिवद्दहेत्॥ अथब्रह्महत्यादिव्रतादेशविष
यउच्यते॥ ॥सद्विविधः॥ ताद्रूप्यताप्रतिपादनेनसादृश्यप्रतिपादनेनवा॥ तत्राद्यविषयेब्रह्महव्रतं पादोनम्॥ द्वितीय

विषयंत्वधर्मम् ॥ तत्राद्यंयथा ॥ सोमायागस्थ क्षत्रियनत्स्थवैश्ययोरात्रेय्याश्चवधः ॥ रजोदर्शनात्प्रभृति षोडशदिनांतवं-
ध्यानिरिक्तास्त्री आत्रेयी अत्रिगोत्रोत्पन्नानारी च गर्भिणीच ॥ केचित्तुता दृशीवंध्याप्यात्रेयीत्याहुः ॥ आत्रेयीविप्रसंबंधि
न्येवविप्रतुल्या ॥ अत्रापिसगुणनिर्गुणादिव्यवस्था सर्वा योज्या ॥ एवंयागस्थस्त्रीवधः ॥ आहिताग्निद्विजाग्न्यभार्याव
धः ॥ विप्रवधफलकानृतसाक्ष्यंविप्रसंबंधिनिक्षेपहरणंच ॥ अत्रनववार्षिकब्रह्महव्रतम् ॥ कामादिकृतेद्वैगुण्यादि ॥ नात्र-
प्राणांतिकत्वम् ॥ क्षत्रियाद्यात्रेयीवधेतुक्षत्रियादिवधोक्तंप्रायश्चित्तम् ॥ द्वितीयंयथा ॥ गुरूणांमुख्यानामाक्षेपेनृतपापाभि
शंसनंच ॥ वेदानामप्रामाण्याभिधानम् ॥ विप्रातिरिक्तमित्रवधः ॥ अधीतवेदस्य बौद्धादिशास्त्रावष्टंभेननाशनम् ॥ प्राणिमात्र
वधफलकानृतसाक्ष्यं ॥ गुणवत्सरस्परंस्पर्धायांगुणवत्वपरीक्षायांवानृतवचनम् ॥ राजकुले ब्राह्मणपीडाजनकपैशून्यंचे-
त्यादि ॥ एतेष्वन्येषुच पूर्वोक्तेषुच ब्रह्महत्यासदृशेषु षडब्दं ब्रह्महव्रतम् ॥ एषु कपालध्वजधारणादिकंनास्ति ॥ ब्राह्मणादि
हनने कृतनिश्चयेनदर्थंसमागत्यसम्य कृशस्त्रादिप्रहारे कृतेकथंचित् प्रतिघातादिप्रतिबंधवशादसौनमृतस्तथापिप्रहर्तुर्य-
थावर्णंब्रह्महत्याप्रायश्चित्तंभवत्येव ॥ तच्चपादोनमितिमिताक्षरादौ ॥ मनसानिश्चितब्रह्मवधस्यस्वतएवोपरतजिघांसस्य
द्वादशरात्रमुदकमात्रभक्षनयोपवासाः ॥ चिकित्सादिनाउपकारेक्रियमाणेविप्रादिमरणेतुनकिमपिपापम् ॥ ॥ इति
ब्रह्महत्याप्रायश्चित्तप्रकरणम् ॥ ॥ अथसुरापानप्रायश्चित्तानि ॥ ॥ मदजनकोन्नविकारविशेषःसुरा ॥ तस्या

प्र॰ ४९

विप्रैर्ज्ञानपूर्वं कामतः सकृदपि पाने मरणांतमेव नेषां प्रायश्चित्तम् ॥ नच्चाग्निवर्णसुरांबुगोघृतगोक्षीरस्त्रीगवीमूत्राणां अन्यतमपा
नेन ॥ पानं च लोहपात्रेण ताम्रपात्रेण वार्द्रवासाः कुर्यात् ॥ नत्पानेनाप्यमरणे तु यावत्प्राणवियोगं नदनंतरमनशनम् ॥ मरणांतिके चा
स्मिन् पर्षदुपदेशो नावश्यकः ॥ किंतु स्वपर्यालोचनेनापि ॥ अकामतो जलबुद्ध्या वा एकवारं सुरापाने गोकेशमेषादिलोमनिर्मि
तवस्त्रावृतस्य जटिलस्य द्वादशवार्षिकं ब्रह्महव्रतम् ॥ अकामतोभ्यासे तु मरणमेव ॥ उदकबुद्ध्या पीतायाः सुरायास्तत्काल
मेव वमने तु पूर्वोक्तधर्मवतो वर्षत्रयं रात्रौ सक्तुतिलकल्कतंडुलकणान्यतरमात्रभक्षणं नत्वन्नभक्षणं प्रत्यहं पंचगव्यपानं च ॥ अ
थवोभयत्र भूमिदानपूर्वकं पुनः संस्कारः ॥ अनेनेह व्यवहार्यतैव ॥ द्वादशाब्दासमर्थस्य पापक्षयोपीतिमिताक्षरा अज्ञानत. सुरा-
यास्तालुमात्रसंयोगे वार्षिकमिदं ॥ ज्ञानतो द्विगुणम् ॥ अकामतः सुरासंस्पृष्टस्य शुष्कतद्रसस्यान्नस्य द्रव्यांतरस्य च वा भक्षणे
तु पुनः संस्कार एव ॥ विप्रस्य सुरागंधाघ्राणे सातपन कृच्छ्रम् ॥ अकामतः कार्यं ॥ अत्र क्षत्रियवैश्ययोः पादपादहानिरितिमांत्वः
॥ ज्ञानतः कामपूर्वं सुरापाने तु मरणमेव सर्वेषां ॥ गौडी माध्वी च गौणी सुरा ॥ मुख्या तु पैष्ट्येव ॥ तत्र मुख्यायां प्रायश्चित्तमुक्तम्
॥ गौडीमाध्व्यांस्तुमत्याभ्यासे अमत्यात्यंताभ्यासे च माधवीये ॥ मत्या मद्यममत्या वा पुनः पीत्वा द्विजोत्तमः ॥ ततोग्निवर्णनसी
त्वामृतः शुध्येत्साकिल्बिषात् ॥ अकामतो गौडीमाध्व्योः सकृत्पाने द्विजानां कृच्छ्रातिकृच्छ्रं चांद्रं च कृत्वा पुनः संस्कारो घृतप्राशनं
च ॥ मतिपूर्वकं तयोः सकृत्पाने छर्दने चत्रैवार्षिकं कणभक्षणम् ॥ कामतो द्विस्त्रिरभ्यासे छर्दने च षडब्दम् ॥ उभयत्र छर्दनाभा

वेप्येवमेवमिति स्मृत्यर्थसारे॥ अकामतो द्विस्त्रिरभ्यासे तु अब्दकृच्छ्रं पुनःसंस्कारश्च॥ अमत्या मत्या वाधिकाभ्यासे द्वादशाब्द-
मिति स्मृत्यर्थसारे॥ तेन पूर्वोक्तं माधवीयं मरणांतिकं द्वादशाधिकाभ्यासे निरंतरं बहुकालाभ्यासे वा योज्यं॥ ॥अथ मद्य-
पाने प्रायश्चित्तम्॥ ॥पनसादिजन्यं मदकारणं द्रवत् द्रव्यं मद्यमिति माधवः॥ तच्चैकादशधा॥ पानसं द्राक्षं माधुकं खा-
र्जूरं तालमैक्षवं मधूत्थं सैरमारिष्टं मैरेयं नारीकेलजमिति भेदात्॥ एतत्पाने क्षत्रियादेर्न दोषः विप्रस्यामत्या सकृत्पाने तप्तकृ-
च्छ्रपूर्वकं पुनःसंस्कारः॥ ज्ञानतः कामतश्च सकृत्पाने कृच्छ्रातिकृच्छ्रं समुद्रगायां नद्यां चांद्रं वा कृत्वा पुनरुपनयनं घृतप्राशनं च
॥मुखमात्रप्रवेशे तु षड्रात्रं पद्मोदुंबरबिल्वपलाशकुशोदकपानम्॥ गौडीमाध्व्योस्तु मुखमात्रप्रवेशो द्विगुणं॥ कामतस्त्वि-
दमेव द्विगुणं॥ अभ्यासे तु तप्तकृच्छ्रादेश्चांद्रादेश्चावृत्तिः॥ अत्यंताभ्यासे मरणमेव॥ अज्ञानतोऽत्यंताभ्यासे द्वादशवार्षिकं॥ मां-
चस्तु विप्रस्य कामतः सकृदपि तालादिमद्यपाने मरणांतमेवेत्याहुः॥ अनन्यौषधसाध्यव्याध्युपशमनार्थं सुरापाने त्वज्ञान-
कृते त्रैमासिकमब्दपादं चांद्रायणं वा कृत्वा पुनरुपनयनं॥ मद्यपाने तु तथाकृते तप्तकृच्छ्रसहितः पुनःसंस्कारः॥ ज्ञानकृते तु त-
प्तकृच्छ्रपराकचांद्राणि मद्येन सकृच्छ्रद्वयं॥ पुनःसंस्कार उभयत्र सुरादेः पानविषये प्रायश्चित्तं तत्पित्रादिभिः कार्यं॥ अस्या-
नुपनीतस्य सुरापाने तु त्रैवार्षिकं पित्रादिभिः कार्यं॥ अनूढाया एतदर्धम्॥ कामकारेपि नानयोर्मरणांतिकं किंतु द्विगुणम्॥ ते-
न षड्वार्षिकं उपनीतस्य षोडशवर्षपर्यंतं षडब्दं॥ केचित् द्वादशवर्षपर्यंतं पादमेव॥ नदूर्ध्वमर्धमित्याहुः॥ एवं वृद्धातुरस्त्रीणा-

मप्यर्धं ॥ एवंरोगनाशार्थेपानेपिबालादीनां यथायोग्यंकल्प्यम् ॥ ॥ अथसुरापानसमानिपापानि ॥ ॥ वेदनिंदाव्य
सनासक्त्याधीतवेदविस्मरणंकूटसाक्ष्यंविप्रव्यतिरिक्तमित्रवधः मत्यात्यंताभ्यासेनगर्हितपलांड्वादिभक्षणंरजस्वलामु
खचुंबनंवाङ्मनःकायकर्मणामनार्जवरूपंजैह्म्यं ॥ आत्मोत्कर्षार्थेराजकुलादौचतुर्वेदोहमित्याद्यनृतभाषणंएतानिसुरा-
पानसमानानि ॥ अत्रब्रह्मवधसमानानामपिकेषांचिद्गणनंप्रायश्चित्तविकल्पार्थंएतेषुसुरापानसमेषुअर्धप्रायश्चित्तम् ॥
इतिसुरापानादिप्रायश्चित्तानि ॥ ॥ अथस्वर्णस्तेयप्रायश्चित्तम् ॥ ॥ विप्रस्वामिकाशीतिगुंजापरिमितसुवर्णापह
रणंमहापातकम् ॥ इतोन्यूनहरणंनमहापातकम् ॥ अपहरणंच समक्षंपरोक्षंवाबलाच्चौर्येणक्रयादिस्वत्वहेतुंविनाग्रहण
मुच्यते ॥ ज्ञाननस्तत्कर्तालोहमयंमुसलमादायप्रकीर्णकेशः स्वदोषंस्वर्णापहाराख्यंख्यापयन् ॥ अनेनमुसलेनमांप्रहरे-
दितिवदन् राज्ञेमुसलमर्पयेत् ॥ तेनसकृद्देवाभिहतोमृतःशुद्धः ॥ यदिदृढप्रहारार्तोपिजीवेत्तदापिशुद्ध्यति ॥ नब्राह्मणंहन्या
दित्यादिनिषेधस्तुरागप्राप्तविप्रवधविषयः ॥ अहननेराज्ञःपापश्रवणात् ॥ माधवस्तुएकस्यतस्यमरणेबहूनांतदीयमित्र-
कलत्रादीनांअनाथतयामरणंसंभाव्ययदिराजादययाधनदंडादिपुरःसरंमुंचतितदापिशुद्धइतिआह ॥ यदिराजादृढं
हंतुमसमर्थस्तदाताम्रमयमायुधंतस्मैदद्यात्तेनात्मानंघातयेत् ॥ मरणात्पूतोभवति ॥ यत्नपूर्वकंकामतोहरणेमुंडित
केशोघृताक्तः स्वकर्मख्यापयन्गोमयाग्निनापादप्रभृत्यात्मानंदाहयेत् ॥ एतच्चापहृतसुवर्णादेकादशगुणंस्वर्णंतत्स्वामि

नेदत्त्वेवकार्यं ॥ गुरुश्श्रोत्रिययागस्थविप्रसुवर्णहरणेकारीषाग्निदाह एव ॥ क्षत्रियादीनामपहर्तृत्वे सर्वथाकारीषदाह एव ॥
स्मृत्यर्थसारेतुसुवर्णस्तेयीविप्रोव्रतमेवाचरेत् ॥ नदंडेनात्मानंघातयेत् नचराजाविप्रंहन्यादित्युक्तं ॥ अकामतो रजकादिबु
ध्यापहारेणसुरापोक्तं द्वादशवार्षिकं ॥ कामतोरजकादिबुध्यापहारेप्येतदेव ॥ शूलपाणिस्तुकामतो रजतादिबुद्ध्याप
हारेएवंद्वादशाब्दं ॥ अकाम तस्तुबुद्ध्यापहारेतुषड्वार्षिकमित्याह ॥ द्वादशवार्षिकविषयेपहर्तुर्महाधनिकत्वेआत्मतु-
लितहेमदानं ॥ निर्गुणस्वामिकहरणंसगुणस्यनववार्षिकं ॥ कश्चित्पादोनसुवर्णहरणेप्येतदेवाह ॥ यदाक्षुत्क्षामकुटुं
बभरणार्थंसगुणोपिविप्रोनिर्गुणस्वामिकमपहरतिनदाषडब्दंतीर्थयात्रासहितंषड्वार्षिकमितिमाधवः॥ कश्चिदर्धसु
वर्णहरणेप्येतदेवाह ॥ ब्राह्मणान्यस्वामिकसुवर्णहरणंनमहापातकम् ॥ किंतूपपातकमितिमिताक्षरा ॥ यदात्वपहारा
नंतरमेवानुतप्यत्यजतिप्रत्यर्पयतिवातदाचतुर्थकालमिताशिनस्त्रिवर्षमवस्थानं क्षत्रियादिसुवर्णापहारेप्येतदेवेनिके
चित् ॥ क्षत्रियादिस्वामिकंहरणमुपपातकमित्यपरे ॥ रजतताम्रादिसंसृष्टसुवर्णापहारेपिद्वादशाब्दमेव ॥ यस्तुताम्रादि
कस्यरसवेधाद्यापादितस्वर्णत्वस्यापहारः सउपपातकमेव ॥ मनसापहारंसंकल्प्यप्रवृत्तस्यस्वतएवउपरतस्यद्वादशरात्रं
वायुभक्षणंमनसिपापध्यानमात्रेणप्रणवव्याहृतिजपपूर्वकंत्रिरात्रंप्राणायामाः॥ वाचाभिलाषेप्राजापत्यम् ॥ स्त्रीबाला
दिष्वर्धादिव्यवस्थाप्रागवत् ॥ क्षत्रियादेःअपहर्तृत्वेक्रमेणद्विगुणंत्रिगुणंचतुर्गुणंज्ञानंनस्तुमरणमेवेतिशूलपाणिः॥ क्षत्रि

यादेः पादपादह्रानिरेव ॥ द्वैगुण्यादिकं तु प्रकरणात् विप्रवधविषयमिति प्रभवदेवः ॥ बालाग्रमात्रसुवर्णापहारे एकः प्राणायामः
च्छिद्राापहारेण तत्त्रयम् ॥ राजसर्षपतुल्येन त्वचतुष्टयं अष्टोत्तरशतगायत्रीजपश्च ॥ गौरसर्षपतुल्ये अष्टसहस्रगायत्रीजपः ॥
यवमितसुवर्णस्तेये दिनद्वयं तज्जपः ॥ कृष्णलस्वर्णस्तेये सांतपनकृच्छ्रम् ॥ माषस्वर्णापहारे मासत्रयं गोमूत्रयावकपानं
॥ पंचगुंजात्मको माषस्तेन सुवर्णस्य षोडश ॥ माषाधिकसुवर्णमानन्यूनहेमापहारे वत्सरं यावकव्रतम् ॥ सुवर्णपरिमाण
तोन्यूनस्यापि बलादपहरणे मरणांतमेव ॥ सुवर्णमानन्यूनरजतस्तेये सांतपनम् तत उर्ध्वं दशनिष्कपर्यंतं चांद्रम् ॥ तत
आशतनिष्कं चांद्रद्वयं ॥ तत आसहस्रात् द्विगुणम् ॥ सहस्रनिष्काधिकरजतस्तेये स्वर्णस्तेयेसमत्वान्नवाब्दं ब्रह्महव्रतम् ॥ ता
म्रकांस्यपित्तलादीनां सहस्रनिष्कमितस्तेये पराकम् ॥ निष्कसहस्ररजतमूल्यानां एषां स्तेये द्वादशाब्दम् ॥ एवं दशनिष्कमूल्यरत्न
हरणं चांद्रम् ॥ आशतं तद्द्वयं ॥ आसहस्रं तत्त्रयं ॥ सहस्रनिष्काधिकमूल्यरत्नहरणं ब्रह्मवधसमत्वान्नवाब्दम् ॥ सहस्राधिक
मूल्यविप्रस्वामिकाश्वमनुष्यभूमिगोप्रजानां सुवर्णभिन्ननिक्षेपस्य च हरणमित्येतानि सुवर्णस्तेयसमानि ॥ एतेषु षडब्दं ॥ स
हस्राधिकमूल्यविप्रस्वामिकवस्तुमात्रहरणं सुवर्णस्तेयसममित्यपरे ॥ युगपदनेकसुवर्णमितहेमापहारेप्येकमेव प्रायश्चित्त
म् ॥ न प्रायश्चित्तावृत्तिर्हरणक्रियाया एकत्वात् ॥ कालभेदे प्रयत्नभेदे च तदावृत्तिः ॥ ॥ इति सुवर्णस्तेयप्रायश्चित्तानि ॥
अथ गुरुतल्पे प्रायश्चित्तम् ॥ ॥ गुरुरत्र पिता तल्पस्तत्पत्नी गमनं चात्र रेतःसेकपर्यंतं चेत् महापातकम् ॥ ततोर्वाक् निवृत्तौत

नुपातकं ॥ तत्राज्ञानादकामतोपि जनन्यामुत्तमवर्णतत्सपत्न्यां च प्रवृत्तस्य सवर्णायां तत्सपत्न्यां तु ज्ञानतः कामतश्च प्रवृत्तस्य मर
णांतमेव ॥ तत्रोभयेच्छया प्रवृत्तौ गुर्वंगनागमनं मया कृतमिति स्वकर्माख्यापयता मुंडितसर्वशरीरकेशनखेन घृताक्तेनाग्निवर्ण
कृते काष्ठशयने तद्वर्णकृतयैव लोहमय्या स्त्रीप्रतिमया सह शयनेन तामालिंग्य कार्यं ॥ स्वेन प्रोत्साहने तु क्षुरेण वृषणौ सलिंगौ
स्वयं छित्वांजलिना गृहीत्वा नैर्ऋत्यां दिशि पृष्ठतो निरीक्षणमकुर्वन् अकुटिलगतिरयतः स्थितमविचारयन् प्राणांतं गच्छेत् ॥
एवं गच्छन् यत्रैव कुड्यादिना प्रतिबुध्यते तत्रैव मरणांतं तिष्ठेत् ॥ तया प्रोत्साहितस्य तप्तलोहशयनमात्रं ॥ जनन्यामुत्तमवर्णेतत्स
पत्न्यां वाज्ञानादकामतः प्रवृत्तावेदन्यत्तममेवेत्यन्ये कामकृते सर्वत्र प्रागुक्तमरणांतकारीषाग्निदाहो वा ॥ अकामतोभ्यासेप्येवं ॥ इदं
मुख्यपुत्रस्यैव ॥ ननु दत्तकादीनां ॥ दत्तकस्य न्यूनं कल्प्यमिति मयूखे ॥ सवर्णायां मातृसपत्न्यामकामादज्ञानतश्च प्रवृत्तौ द्वा
दशाब्दं अस्यां कामतः प्रवृत्तस्य रेतःसेकात् प्राक् निवृत्तौ द्वादशवार्षिकं ॥ जनन्यामुत्तमवर्णतत्सपत्न्यां च अकामतः प्रवृत्तस्य रे
तः ॥ सेकात् पूर्वं निवृत्तौ द्वादशवार्षिकं ॥ एषु त्रिषु अकामतोर्धं ॥ विप्रपुत्रस्य क्षत्रियां पितृभार्यां गच्छतो नववार्षिकम् ॥ वैश्यां
षड्वार्षिकम् ॥ शूद्रायां त्रैवार्षिकम् ॥ अभ्यासे तिसृष्वपि द्वादशाब्दम् ॥ अत्यंताभ्यासे मरणांतमेव ॥ गुरुपत्नीसाम्यात् ॥ मा
तुः सपत्नीं सवर्णां व्यभिचारिणीमज्ञानतो गच्छतो वेदजपसहितं चांद्रायणत्रयम् ॥ ज्ञानतः संवत्सरं ब्रह्महव्रतम् ॥ एवं ल
घुप्रायश्चित्तानि व्यभिचारिण्युत्तमवर्णसवर्णविषयेषु व्यवस्थया योज्यानि ॥ गर्भोत्पत्तौ त्वेतान्येव द्विगुणानि ॥ मरणांतिरि

क्तविषयेगमनावृत्तौप्रायश्चित्तावृत्तिर्यत्रद्विगुणोक्तिस्तत्र द्वैगुण्यावृत्तिश्च॥ सर्वत्ररेतःसेकात् प्राक्निवृत्तौ मरणांतविषये द्वादशा
ब्दं अन्यविषयेरेतःसेकाभावेनतदर्द्धम्॥ गुरूपयुक्तास्वपिसाधारणस्त्रीषुगमनेगुरुतल्पदोषोन॥ आस्तांकन्यादूषणादिदोषो
न॥ किंतु पूर्वोक्तंतत्प्रायश्चित्तंद्विगुणम्॥ स्त्रीणामपिपुत्रादिष्वेषुमत्याप्रवृत्तौमरणांतमेव॥ अमत्याप्रवृत्तौद्वादशाब्दिकंपुरुषो
क्तवत्कार्यम्॥ अन्येषुस्त्रीणामपिकामतःप्रवृत्तौसर्वत्रपुरुषोक्तार्द्धंकृत्यायोज्यमित्याहुः॥ ॥ अथातिदेशिकप्रायश्चि
त्तानि॥ ॥ पितृष्वसामातृष्वसाश्वश्रूपितृव्यभ्रातृमातुलाचार्यमित्रशिष्याणांभार्याःसुताश्चसापत्नभगिनीआत्मसखीपि
तृमातृसखीभगिन्याःसखीभगिनीस्नुषादुहिताशरणागताराज्ञीप्रव्रजितापतिव्रताधात्रीचैतासुगमनंगुरुतल्परूपम्॥
पितृव्यभ्रात्रोरुपनेत्रोरेवभार्ययोरेतास्पितृव्यभार्यादयःस्वस्त्रादयश्चसमानवर्णाएव॥ आसुकामतोद्वित्रिपर्यंताभ्यासेका
मतःसकृद्गमनेचनववार्षिकम्॥ कामतोद्वित्रिवारंगमनेनववार्षिकावृत्तिः॥ अकामतःसकृद्गमनेषड्वार्षिकम् कामतस्त्वधि
काभ्यासे अकामतश्चैकरात्रादूर्ध्वमत्यंताभ्यासेच मरणमेव॥ कुमारीभागिनेयीस्वगोत्रापितृष्वसृमातृष्वस्रोःकन्यामातामहपि
तामहयोर्भार्याश्रोत्रियर्त्विगुपाध्यायभार्यागुणवद्रजस्वलानिक्षिप्तापौत्रीदौहित्री अंत्यजाम्लेच्छीपुल्कसीचेत्येवमादिषुगमनंगु
रुतल्पसमानम्॥ अंत्यजाश्चात्र॥ चांडालःश्वपचःक्षत्तासूतोवैदेहकस्तथा॥ मागधायोगवाश्चेतिसप्तैव॥ नतुरजकश्चर्मका
रश्चेत्यादिप्रतिपादिताः॥ तेषुलघुप्रायश्चित्तस्योक्तत्वात्॥ आस्तां एकरात्रादूर्ध्वअभ्यासेषड्वार्षिकं॥ एकरात्राभ्यासेत्रैवार्षिकं॥

उभयत्र कामतो द्विगुणम् ॥ कामतोऽत्यंताभ्यासे मरणमेव ॥ आस्वज्ञानतः सकृद्गमने त्रैवार्षिकम् ॥ अंत्यजादिषु तु ज्ञानतः सकृ-
द्गमने वार्षिकं कृच्छ्रं ॥ अज्ञानेऽर्धम् ॥ चांद्रायणद्वयमित्यन्ये ॥ गुरुतल्परूपेषु तत्समेषु चरेतः सेकात् प्राक् निवृत्तौ चांद्रायणम् ॥
अकामतस्त्वत्र तप्तकृच्छ्रम् ॥ यदा पुनरेता एवात्यंतव्यभिचारिणीर्गच्छति तदाप्यकामतस्तप्तकृच्छ्रं पराको वा ॥ कामतस्तु चां
द्रम् ॥ अभ्यासे आवृत्त्यादि ॥ ॥ इति गुरुतल्परूपतत्समप्रायश्चित्तानि ॥ यानि महापातकसमानि तान्येवानुपातकानि ते
षु च प्रायश्चित्तानि ब्रह्महत्यादिमहापापप्रबंधकेषु चतुर्षूक्तान्येव अथ गौडादिमते मातृगमनं सापत्नमातृगमनं दुहितृस्वसृस्नु
षागमनं चेति पंचातिपातकानीति यावंत्युक्तानि तत्राद्ययोर्व्यवस्थया प्रायश्चित्तानि उक्तान्येव ॥ दुहितृगमनादिषु त्रिषु सकृद्गम
नेन वा षड्द्वादशाब्दादि द्वित्र्याद्यभ्यासेऽग्निप्रवेशादिना मरणमिति ॥ अत्र माधवः मातरि स्वसृसुता भगिन्योश्च क्रियानिवृत्तौ मरणां
नम् ॥ तच्च मातरि सकृत्त्वे अन्ययोरसकृत्त्वे ॥ संकल्पाध्यवसाययोश्चांद्रत्रयम् ॥ शेषं पंचविधापराधविषये प्राजापत्यद्वयमित्यप्रवि-
धमैथुनप्रकारभेदेन व्यवस्थामुक्तवान् ॥ ॥ इति महापातकानुपातकातिपातकप्रायश्चित्तानि ॥ ॥ अथ संसर्गाख्यमहा
पापे प्रायश्चित्तम् ॥ ॥ संसर्गश्च एकभांडपचनतद्दीयान्नभोजनएकपात्रसहभोजनेष्टिसोमादिश्रौतयागयाजनाध्ययना
ध्यापनविवाहैः संभाषणगात्रसंमर्दनमुखवायुसंसर्गैकयानारोहणैकासनस्थित्येकवस्त्रादिशयनैकपंक्तिभोजनैश्च ॥ तत्र
विवाहो नाम तस्मै कन्यादानं तस्माच्च कन्याग्रहणम् ॥ अत्र विवाहांतैरेकैकैरप्यनुष्ठितैः सद्यःपातित्यमिति शंखः एतैः प्रत्येकैर

पिसंवत्सराभ्यस्तैरेव पातित्यमिति मनुः॥ तत्रविवाहस्य संवत्सराभ्यासस्तत्संबंधिनिमित्तकभोजनाद्यभ्यासरूपः संभाषणा
दिसमभिव्यक्तसमुदितैः संवत्सरपर्यंतंनिरंतराभ्यस्तैरेव पातित्यं प्रत्येकंतेषांतथाभ्यासेपिनपातित्यम्॥ तथाच चतुर्विधमहापा
तकिसंबन्ध्यन्यतमेनोक्तद्विविधसंसर्गस्य पातित्यहेतोर्ज्ञानतः करणं द्वादशाब्दं॥ अकामतोऽर्धमज्ञानतश्च॥ एवंचपतितेनसमंय-
स्यवर्षंनिरंतरमज्ञानतः संसर्गः सपानकीव्रतार्धंकुर्यात्॥ ज्ञानतस्तत्तदीयंसंपूर्णमेव॥ मरणस्थानेस्य द्वादशाब्दमेव॥ प्राञ्च
स्तु अज्ञानतः संसर्गेपादन्यूनंतत्॥ ज्ञानतः संपूर्णं॥ मरणस्थाने चतुर्विंशतिवार्षिकमित्याहुः॥ संभाषणादित्रयरहितेयानादि
चतुष्टये संवत्सराभ्यस्तेपि पंचमभागोनंप्रागुक्तम्॥ तत्सहितेतुपूर्णंद्वादशाब्दादि॥ अथांतरितादिगणनादिना पंचरात्रमज्ञान
तः संसर्गेउपवाससहितपादकृच्छ्रम्॥ दशाहेकायम्॥ द्वादशाहसंसर्गेसांतपनं॥ पक्षेदशोपवासाः॥ मासंचेत्पराकः मासत्र
येचेच्चांद्रम्॥ षण्मासिकेचांद्रद्वयं॥ किंचिन्न्यूनेब्देषण्मासकृच्छ्रं॥ कामतः संसर्गेतुपंचाहेकृच्छ्रम्॥ दशाहेतप्तकृच्छ्रं॥ पक्षेप-
राकः॥ मासेचांद्रम्मासत्रयेकृच्छ्रंचांद्रंच॥ षाण्मासिकेर्धाब्दकृच्छ्रम्॥ किंचिन्न्यूनेब्देअब्दंचांद्रायणं कामतोत्यंतापदिषण्मा
सपंचमहायज्ञादिस्मार्तयाजनेगाध्यापनेदुहितृभगिनीव्यतिरिक्तेचयोनिसंबंधेषडब्दम्॥ अकामतोर्धम्॥ एवमतिपातकिसं
सर्गिणांकामतोनववार्षिकम्॥ अकामतोऽर्धम्॥ अनुपातकिसंसर्गिणांषड्वार्षिकं॥ अकामतोर्द्धम्॥ तथोपपातक्यादिसंसर्गि
णांस्तु स्वस्वपातकितुल्यंत्रैवार्षिकंत्रैमासिकादिकं॥ अकामतोर्द्धमित्याद्यूहनीयम्॥ मयूखेत्वितरपापिसंसर्गेतत्तद्व्रतंपादोनंका-

र्यमित्युक्तं ॥ सर्वत्र संसर्गे बालस्त्रीवृद्धातुराणामर्धम् ॥ अकामतः पादः ॥ अनुपनीतबालस्य कामतोऽपि पाद एव ॥ अकामतोऽर्द्ध
पादः ॥ माधवस्तु संसर्गिदोषः कलौ पातित्यापादको न किंतु पापमात्रापादकः ॥ संसर्गदोषः पापेष्विति कलिवर्ज्येषु गणनादित्याह
॥ वस्तुतस्तु ॥ त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥ द्वापरे कुलमेकं तु कर्तारं तु कलौ युग इति पराशरस्मरणात् कृतयुगादौ दो
षजनकत्वेनोक्तदेशादिसंसर्गस्यैव कलिवर्ज्येषु गणनं युक्तम् ॥ अयं चापरः कलौ विशेषः यत्कृते संभाषणमात्रादेव पातित्यं त्रेता
यां स्पर्शमात्रात् द्वापरे तत्स्वामिकान्नमात्रग्रहणात् ॥ तत्कलौ स्नेहेन समुदितेनैव संभाषणादिकर्मणा न त्वेकेनेति दिक् ॥ संसर्गिसं
सर्गिणां पादपादहानिः ॥ तथा च मुख्यमहापापिनां संसर्गवतो द्वादशाब्दं ॥ तत्संसर्गिणो मुख्यात्तृतीयस्य नवाब्दम् ॥ तृतीये
नसंसर्गवतो मुख्याच्चतुर्थस्य षडब्दं ॥ पंचमस्य त्रैवार्षिकम् ॥ मुख्यसंसर्गिणो द्वितीयस्यैव पातित्यात् श्रौतस्मार्तकर्महानिः ॥
तृतीयादेः प्रायश्चित्तमात्रं न तु वैदिककर्महानिरिति मिताक्षरा ॥ प्रांचस्तु पादहानिक्रमेण तृतीयेन संसर्गिव्रतार्धमात्रं कार्यं ॥ चतु
र्थस्य तु मुख्यात्पंचमस्य न किंचिदित्याहुः ॥ ॥ इति संसर्गिप्रायश्चित्तम् ॥ ॥ पतितोत्पन्नानां तु यस्य पतितस्य यदुक्तं तत्तृ
तीयांशः पुंसां कन्यानां तु नवमोंशः ॥ पतितोत्पन्ना कन्यां तदीयधनरहितां विवस्त्रां कृत्वा पूर्वोक्तपतितनवमांशप्रायश्चित्तां महोरा
त्रोपोषितां स्वकीयशुक्लवाससाच्छादितां नाहमेतेषां नैते ममेति त्रिरुच्चैर्वदंतीं देवालयादौ स्वगृहे वा विवाहयेत् ॥ अथ पतिता महा
पातकिनोऽनुपातकिनस्तत्संसर्गिणश्च ॥ तथा नास्तिकः प्रमादान्नास्तिक्याद्वा चिरं श्रौतस्मार्तकर्मत्यागी पतितपुत्राद्यत्यागी महा

पापेषु॥ अनुपातकेषुननु कर्तॄणां प्रयोजकाः॥ गोघ्नादयोमांसभक्षकादयश्च॥ एतेचाकृतप्रायश्चित्तानसंव्यवहार्याः मातुस्तु
ना दृश्या अपिनतथा॥ किंतुसेवापोषणंकार्यंपृथक्पितुरपिमहापातकिनएवत्यागः॥ प्रकारांतरेणपतितस्यनत्यागः॥ किंचपि-
तुर्दोषंस्वयंज्ञात्वापिप्रथमतःपरेभ्योनकथयेत्॥ तत्कालेस्वयंतेनसंव्यवहरेत्॥ यत्यादेःस्त्रीसंगेषुपुनर्गार्हस्थ्यकरणेप्रायश्चि
त्ताभावएव॥ आरूढंनैष्ठिकंधर्मंयस्तुप्रच्यवतेपुनः॥ प्रायश्चित्तंनपश्यामियेनशुद्ध्येत्सआत्महेतिवचनात्॥ उपपातकत्वात्
प्रायश्चित्तंभवत्येवेत्यन्ये सर्वथात्वव्यवहार्यताबहिस्तूभययास्मृतेराचाराच्चेतिव्याससूत्रात्॥ नैष्ठिकानांवनस्थानांयतीनां
चावकीर्णिनाम्॥ शुद्धानामपिलोकेस्मिन्प्रत्यापत्तिर्नविद्यतेइतिवचनाच्च॥ एवंस्त्रीबालशरणागतहंतारःकृतघ्नाश्चकृतप्रा
यश्चित्ताअपिनसंव्यवहार्याः अतोव्यभिचारिण्यावधेप्रायश्चिंत्ताल्पत्वेपिवचनाद्व्यवहार्यत्वाभावइतिमिताक्षरा॥ स्त्रीणांमहा
पापानिपापानुपापानिअभ्यस्तोपपातकानिचपातित्यनिमित्तानि॥ विशेषतोहीनवर्णगमनंस्वगर्भपातनंभर्तृहिंसनंचशिष्यगु
रुजुंगितोपगमनानिचेत्येतानि॥ महापापेषुकृतप्रायश्चित्तेष्वागतेषुसपिंडास्तेनसहपुण्यजलेस्नात्वाऽपांपूर्णंकुंभंपुण्यदेशे-
कालेपुण्यदिङ्मुखानयेयुः ततःसगोभ्योयवसंदत्वागोभिर्भक्षिततृणेशुद्धःसंव्यवहार्यश्च॥ स्त्रीणामपिपतितानामेवपरि
ग्रहः इदंघटस्फोटोत्तरंकृतप्रायश्चित्तस्यपरिग्रहविषयमित्यन्ये॥ वाचस्पतिमिश्रास्तुमत्यामहापातकिनोतिपातकिनश्च-
प्रायश्चित्तेकृतेपिनव्यवहार्याः प्रायश्चित्तंतुतेषांपरलोकशुद्ध्यर्थमेवेत्याहुः॥ यस्तुनरोनारीवाबुद्धत्यात्पातित्येपिप्रायश्चित्तंने

च्छतितं सर्वे सपिंडाः बांधवाश्च राजादिसमक्षमाहूय तत्पापं व्यक्तं कृत्वा मुहुरुपदिशेयुः ॥ प्रायश्चित्तं कुर्वाचारं लभस्वेति स यदि एवम
पि नांगीकरोति तदा रिक्तादिनिंद्यतिथौ सायान्हे ग्रामात् बहिः संभूय कुत्सितजलादिसंपूर्णं प्राचीनावीतिनो दक्षिणामुखा गुरुसन्नि
धौ अस्माकं त्वं मृत इति वासुमनुदकं करोमीति वा वदंतो दर्भेषु च्छिन्नाग्रेषु न्युब्जं कुर्युः ततः सर्वे निरीक्ष्यमाणा अप उपस्पृश्य ग्रामं
प्रविशेयुः ॥ सपिंडानामेकाहमाशौचं ॥ ततोधिकारी कर्ता दाहवर्ज्यं जीवंतमेवोद्दिश्य पिंडोदकदानादि प्रेतकर्माणि सपिंड्याः
माकृतनानि कुर्यात् ॥ उदकपिंडादि प्रेतक्रियोत्तरं पात्रनिनयनमिति मिताक्षरायां स्पष्टम् ॥ ततः सर्वकर्मबहिष्कृतेन तेन संभाषणा
दिकं वर्जयेत् ॥ प्रमादात्संभाषणे सावित्रीं जपन् एकरात्रं तिष्ठेत् ॥ मत्या त्रिरात्रम् ॥ अब्दपर्यंताभ्यासे पातित्यम् ॥ स्त्रीणामपिता
दृशीनां गृहसमीपे पर्णकुट्यादौ वासं दत्त्वा जुगुप्सितमन्नं प्राणधारणमात्रसमर्थं जीर्णमलिनवस्त्रं च दद्यात् ॥ घटस्फोटोत्तरं शिष्य
गागुरुगापतिघ्नीनां च सर्वथैव त्यागः ॥ घटस्फोटप्रयोजनमन्यत्र द्रष्टव्यं ॥ एकस्मिन्नभिन्ने गुरुलघुभूतानेकविरुद्धप्रायश्चि-
त्तादिप्राप्तौ देशकालवय आदिकमवेक्ष्य परिषदा व्यवस्था कल्प्या ॥ यथा जलवासो हिमदेशे शिशिरकाले च नोपदेष्टव्यः ॥ उ
पवासादिकं बालवृद्धयोर्न ॥ एवं शक्तिरवेक्ष्या ॥ अन्यथा युवा पित्तप्रकृतिर्निरंतरोपवासाननुतिष्ठन् व्यापद्येतेत्यादिकमूह्यं ॥
अनुक्तप्रायश्चित्तेषु जपतपोहोमोपवासदानानि देशकालशक्तिपापलाघवगुरुत्वादिकमपेक्ष्य कल्प्यानि ॥ तत्र जपो गायत्र्यादेः होमः
तिलानां व्याहृतिभिर्गायत्र्या वा ॥ तपः पयोभक्षता शाकाहारता फलाशनं प्रसृतियावकता हिरण्योदकप्राशनं ब्रह्मचर्यं तीर्थोद

कृस्नानं आर्द्रवस्त्रता ३ नशनमिति तपांसि ॥ दानं हिरण्य गो वस्त्राश्ववतिलभूमिघृतानां संवत्सरं षण्मासाश्चत्वार स्त्रयो द्वावेकश्चतु
र्विंशतिरहानि द्वादशाहः षडहस्त्र्यहो द्वोरात्र इति कालः ॥ पापस्य गुरुलघुत्वे त्वर्थवादेन दंडेन वाज्ञानकृतत्वादिभिर्वा बोध्ये ॥ एवं पा
पिनां प्रायश्चित्ताकरणे तामिस्र लोहशृंखल रौरव महारौरव संघात काल सूत्रक प्रतापनासिपत्रव धतामिस्र प्रभृति नरकेषु नानावि
धेषु प्रथमं वासोनंतरं पुनरस्मिन्संसारे श्वसूकरादिषु योनिजन्मानि ॥ ततः कदाचिन्मानुषयोनौ जातस्यापि कुरोगित्वं ॥ रोगाश्चारंभे
एव दर्शिताः ॥ एवं च नरकोपभोग क्षीणदोषाणामपि तद्रोगानुमितावशेषाणां प्रायश्चित्तं कार्यं ॥ अकृतप्रायश्चित्तानां कुष्ठादिरोगि
णां दाहकस्य यति चांद्रायणम् ॥ गंगास्नान विष्णुस्मरण तन्नामजपादिकं सर्वपापप्रायश्चित्तमिति सर्वेष्टसिद्धिः ॥ श्रीनागोजीभट्ट
कृतं प्रायश्चित्तेंदुशेखरम् ॥ काशीनाथ उपाध्यायव्यशोधयद पूरयत् ॥ १ ॥ ॥ इति श्रीशिवभट्टसुत सती गर्भज नागोजीभ
ट्टकृतः श्रीमदनंतोपाध्यायसूनु काशीनाथोपाध्यायकृत शोधनोपबृंहण पूरणशाली प्रायश्चित्तेंदुशेखरनाम ग्रंथः समाप्तिमगमत्
॥ ॥ अथ सर्वप्रायश्चित्तप्रयोगः ॥ ॥ तत्र षडब्द त्र्यब्द सार्द्धाब्दादि व्यवस्था प्राजापत्य प्रत्याम्नायाश्च परिभाषोक्ता एव ॥
तत्र त्रिंशत्कृच्छ्रमब्दम् ॥ पंचचत्वारिंशत्कृच्छ्रं सार्धाब्दम् ॥ नवति कृच्छ्रं त्र्यब्दं ॥ कृच्छ्रं प्राजापत्यमिति पर्यायौ ॥ कृच्छ्रे गवादय
श्चान्निष्कयरजतानिष्कतदर्धतत्पादादयः प्रत्याम्नायाः ॥ तत्र सामग्र्युपकल्पनम् ॥ फल तांबूल गंध पुष्प धूप दीपाः पंचगव्यानि शृ
ङ्गस्म गोमय दूर्वा तिलाः समिद्दर्भाः होमार्थं घृतं पर्षद्दक्षिणानि वं धानुवादक पूजार्थं दक्षिणा पूर्वोक्त रांगगोप्रदान विष्णुश्राद्धद्रव्य-

॥ व्यवराने कं वा विप्रं पर्षत्वेनोपवेश्य कृतस्नानः शुक्लश्वेतार्द्रवासाः कर्ताविप्रान् प्रदक्षिणीकृत्य सा
मिति ॥ ॥ अथ प्रयोगः ॥ ॥ अथ प्रयोगः ॥ व्यवरानेकं वा विप्रं पर्षत्वेनोपवेश्य कृतस्नानः शुक्लश्वेतार्द्रवासाः कर्ताविप्रान् प्रदक्षिणीकृत्य सा
ष्टांगप्रणमेत् ॥ विप्रैः किं ते कार्यं मिथ्या मा वादी सत्यमेव वदेति पृष्टः गोवृषयोर्निष्क्रयीभूतं निष्कतदर्धतत्पादान्यतमप्रमाणं स्वजनद्रव्यं
सभ्येभ्यः संप्रददेन ममेति संकल्पपूर्वकं सभ्याग्रे निधाय अमुकनामस्य मम जन्मप्रभृति अद्य यावत् ज्ञानाज्ञानकामाकामसकृ
दसकृत् कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातक
संकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णकपातकानां मध्ये संभावितपापानां निरासार्थं प्रायश्चित्तमुप
दिशंतु भवंत इति वदेत् ॥ पुत्रादिः प्रतिनिधिश्चेन्मम पितुर्जन्मप्रभृतीत्यादि वदेत् ॥ श्रौतस्मार्ताधानांगेतु प्रायश्चित्तेन निरासार्थं
मित्यंते अग्निपरिचरणेऽधिकारार्थं च अग्निविच्छेदप्रायश्चित्तं चोपदिशंतु भवंत इति वदेत् ॥ तत्तदंकपापेतु किं ते कार्यमिति
प्रश्ने मया मुकवधः कृतः अमुकभक्षणं वाऽमुकगम्यागमनं कृतमित्यादि मा कृतमेव पापमुच्चार्य तत्प्रायश्चित्तमुपदिशंतु भवंत
इति वदेत् ॥ जन्मप्रभृति अद्य यावदित्यादिकं न वदेत् ॥ ततः सर्वधर्मविवेक्तारो गोप्तारः सकला द्विजाः मम देहस्य संशुद्धिं कुर्वं
तु द्विजसत्तमाः ॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ॥ प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥ पूज्यैः कृतपवित्रोहं
भवेयं द्विजसत्तमैः इति प्रार्थयित्वा ॥ मामनुगृह्णंतु भवंत इति नमेत् ॥ ततः सभ्यैः शक्त्यादि विचार्य प्रायश्चित्ते निश्चिते क
र्ता चंदनपुष्पादिभिः पुस्तकपूजामनुवादकपूजां च कृत्वा निबंधपूजालेन किंचिद्द्रव्यं निधायानुवादकाय भृतिरूपां दक्षिणां

पापानुसारेण दद्यात् ॥ ततः सभ्याः पुस्तकवाचनपूर्वकमनुवादकस्याग्रे कथयेयुः ॥ अनुवादकश्च कर्तारं वदेत् ॥ ॥तद्यथा॥
॥ सभ्यैरुपदिष्टोनुवादकः अमुकस्य ते जन्मप्रभृति अद्ययावत् ज्ञानाज्ञान कामाकाम सकृदसकृत् कृत कायिकवाचिकमान
सिक सांसर्गिक स्पृष्टास्पृष्ट भुक्ताभुक्त पीतापीत सकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणा
पात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्ये संभावितपापानां निरासार्थं पर्षदुपदिष्टं सार्धाब्दप्रायश्चित्तं अमुकप्रत्याम्नाय
द्वारा प्राच्योदीच्यांगसहितं त्वया आचरितव्यं तेन तव शुद्धिर्भविष्यति त्वं कृतार्थो भविष्यसीति त्रिरुपदिशेत् ॥ आधानांगे तु सार्द्धा
ब्दप्रायश्चित्तं अग्निविच्छेदप्रत्यवायनिरासार्थं विच्छेददिनादारभ्य प्रतिवर्षमेकैककृच्छ्रं चेत्यादि पूर्ववत् ॥ कर्ता ओमित्यंगीकृत्य
प्रणम्य पर्षदं विसृजेत् ॥ ततो रिक्तायां सायान्हे देशकालौ संकीर्त्य अमुकशर्मणो मम जन्मप्रभृति अद्ययावत् ज्ञानाज्ञान मध्ये सं-
भावितानां पापानां निरासार्थं पर्षदुपदिष्टं सार्द्धाब्दप्रायश्चित्तं प्राच्योदीच्यांगसहितं अमुकप्रत्याम्नायेनाहमाचरिष्ये ॥ आधाने
तु आधानाग्निपरिचरणादिपुण्यकर्मण्य अधिकारसिद्ध्यर्थं च सार्धाब्दप्रायश्चित्तं अग्निविच्छेददिनादारभ्य प्रतिवर्षमेकैक
कृच्छ्रप्रायश्चित्तं च तंत्रेण प्राच्योदीच्यांगसहितं अमुकप्रत्याम्नायेन अहमाचरिष्य इति संकल्पः ततः यानि कानि च पापानि
ब्रह्महत्यासमानि च ॥ केशानाश्रित्य तिष्ठंति तस्मात्केशं वपाम्यहम् इति मंत्रेण क्षौरं कार्यं ॥ क्षौराभावे सार्धाब्दादिव्रतं द्विगु
णं पर्षद्दक्षिणापि द्विगुणा ॥ यत्र तु सभर्तृकस्त्रियाजीवत्पितृकादेश्च क्षौरं निषिद्धं तत्र न द्विगुणव्रतं क्षौरं च शिखाकक्षोपस्थव

र्जनं नखकेशरोम्णां मुदक्संस्थं वपनमिति सर्वत्र ॥ रोमवर्जनमप्यन्यत्र यत्र गोवधादौ विशेषवचनं तत्र प्रायश्चित्ते शिखासहित
मपि वपनम् ॥ प्रमादात् शिखावपने कुशमयशिखां ब्रह्मग्रंथियुतां दक्षिणकर्णे निदध्यादिति काठके ॥ शिखां छिंदंति ये मो-
हात् द्वेषाद ज्ञानतोपि वा ॥ पुनः संस्कारमर्हंति त्रयो वर्णा द्विजातय इति संग्रहे गृह्याग्निसारे ॥ यज्ञोपवीतसहित शिखात्यागेपि
पुनरुपनयनमेव ॥ क्रोधादिना केवलयज्ञोपवीतत्यागे तु प्रायश्चित्तं करिष्ये इति संकल्प्य आचार्यं वृत्वा सवितारं गायत्र्याति-
लै राज्येन अष्टसहस्त्रशतं वा जुहुयात् इति प्रासंगिकं ॥ क्षौराद्यंगजातं च कृच्छ्राधिके भवति न कृच्छ्रन्यूने इति मयूखादौ प्राजाप
त्यत्रयमित्यधिके वा प्रायश्चित्ते भवति न तु ततो न्यून इति गृह्याग्निसागरमतं ॥ क्षौरांते गंडूषान् कृत्वा यथोक्तदंतकाष्ठेन ॥ आ
युर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥ ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ॥ इति मंत्रेण दंतशुद्धिं कृत्वा काष्ठांतरेण जिह्वा
मुल्लिख्य स्नात्वा भस्मादि दशस्नानानि कुर्यात् ॥ तत्र प्रायश्चित्तांग भस्मस्नानं करिष्ये ॥ इति संकल्प्य भस्म गृहीत्वा ईशानायन
मेति शिरसि लिंपेत् ॥ तत्पुरुषाय नमेति मुखे ॥ अघोराय नमेति हृदये ॥ वामदेवाय नम इति गुह्ये ॥ सद्योजाताय नमः पादयोः
॥ प्रणवेन सर्वांगेषु ईशानादि पादोपेतैर्मंत्रैर्वा भस्मस्नानं ॥ ततः स्नात्वाचामेत् ॥ अथ गोमयस्नानं करिष्ये इति संकल्प्य ॥
गोमयमादाय प्रणवेन दिक्षु दक्षिणभागं तीर्थे चोत्तरभागं प्रक्षिप्य शेषं मानस्तोक इत्यभिमंत्र्य गंधद्वारामिति मंत्रेण अग्रम
ग्रं चरंतीनामिति सर्वांगमालिप्य ॥ हिरण्यशृंगं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ॥ यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्र

हः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं ॥ तन्नइंद्रोवरुणोबृहस्पतिः सविताचपुनंतुपुनः पुनः इति द्वाभ्यामवतेहेळइति द्वा
भ्यांप्रसम्राजेइतिसूक्तेनचतीर्थंप्रार्थ्य ॥ याः प्रवतोनिवतउद्वतइतितीर्थमभिमृश्यस्नात्वाद्विराचामेत् ॥ हिरण्यशृंगमित्यादि
तीर्थप्रार्थनादिकंसर्वदर्शविधस्नानांतेएवकार्यमितिमयूखे ॥ ततोमृत्तिकास्नानंसंकल्प्य अश्वक्रांतेरथक्रांतेविष्णुक्रांते
वसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ इतिमृत्तिकामभिमंत्र्य ॥ उद्धृतासिवराहेण कृष्णेनशतबाहुना ॥ मृत्ति
केहरमेपापंयन्मयादुष्कृतंकृतम् ॥ इतिमृदमादाय ॥ नमोमित्रस्यवरुणस्येतिसूर्यायप्रदर्श्य ॥ गंधद्वारामिति मंत्रेण वा
स्योनापृथिवीतिवाइदंविष्णुरिति वाशिरः प्रभृत्यंगानिविलिप्यस्नात्वाद्विराचामेत् ॥ अथवाविस्तरेणमृत्तिकास्नानम् ॥
॥ तद्यथा ॥ ॥ बलिस्थापर्वतानामिति भूमिं प्रार्थ्य ॥ मांवोरिषत्खनितेतिखनित्वा ॥ स्योनापृथिवीतिमृदमादाय ॥ आ
यनेतेतिदूर्वामादाय ॥ गायत्र्याभ्युक्ष्य भूमौ मृदंनिधायमृत्तिकास्नानंकरिष्ये ॥ इतिसंकल्प्य ॥ मृदंकुशोदकेनप्रोक्ष्यादिक्षुक्षि
पेत् ॥ तत्र मंत्राः ॥ त्रातारमिंद्रमिति पूर्वस्याम् ॥ यमायमधुमत्तमराज्ञेइति दक्षिणे ॥ तत्वायामीतिपश्चिमे ॥ वयंसोमइत्युत्तरे ॥
तत्सूर्यंरोदसीत्युपरि ॥ अधःपश्यस्वेत्यधः ॥ ततोंऽगेषुलेपः ॥ सहस्रशीर्षेतिशिरसि ॥ अक्षीभ्यांतेनासिकाइतिमुखे ॥ ग्रीवाभ्य
स्तइतिग्रीवायां ॥ आंत्रेभ्यइतिहृदये ॥ नाभ्यानाभिन्नइतिनाभौ ॥ त्वमिंद्रसजोषसमितिबाह्वोः ॥ सोमानंस्वर॰ कक्ष्योः ॥ यःकु
क्षिरितिकुक्ष्योः ॥ बह्वीनांपितेतिपृष्ठे ॥ मेहनाद्वनंकरणादितिजान्वोः ॥ एतावानस्येतिपादयोः ॥ यस्यविश्वानिहस्त॰इतिहस्त

योः॥ अंगादंगादितिपुरुषसूक्तेन च सर्वांगे॥ अथ शुद्धोदकस्नानं॥ ॥आपोअस्मानित्यृक्त्वा सूर्याभिमुख इदंविष्णुरिति
मंत्रेण प्रवाहाभिमुखो मज्जेत्॥ आपोहिष्ठेत्यृचेत्यन्ये॥ अथ पंचगव्यैः कुशोदकेन चेति षट्स्नानानि॥ तत्रादौ गोमूत्रस्नानं क
रिष्ये॥ तत्सवितुरिति गोमूत्रस्नानं॥ स्नात्वाचम्य॥ एवमग्रेपि॥ गंधद्वारामिति गोमयेन॥ आप्यायस्वेति क्षीरेण॥ दधिक्राव्ण इति
दधिस्नानम्॥ घृतंमिमिक्ष इति तेजोसीति वा घृतस्नानं॥ देवस्य त्वा सवितुः प्रस० इंद्रियेणाभिषिंचामि ति कुशोदकेन स्नानं॥ यद्दे
तानि दशापि स्नानानि॥ अमंत्रकाण्येव कार्याणि॥ इमंमे गंगे० ऋतमित्यान० समुद्रज्येष्ठा इति चतसृभिः॥ एतोन्विंद्रं स्तवेति तिसृ
भिः॥ तरत्स मंदीति सूक्तेन॥ पावमानीभिरापोहिष्ठेति तृचेन मार्जनं च कृत्वा इमंमे गंगे इत्युदकमालोड्य॥ ऋतं चेति तृचेन त्रिरा
वृत्तेनाघमर्षणं कृत्वा त्रिर्द्वादशवारं वा मज्जनानि कृत्वा स्नानांगतर्पणं कुर्यात्॥ अत्र प्राचीनप्रयोगेषु मृत्तिकास्नानोत्तरं मार्जनाघ
मर्षणोक्तिर्दृश्यते तत्र मूलं मृग्यं॥ दशाविधस्नानप्रयोगे प्रक्रांते स्नानत्रयांतेऽघमर्षणम्॥ ततः सप्तस्नानानीति क्रमस्य निर्युक्तिकत्वात्
॥ सर्वदशाविधस्नानांते एवाघमर्षणतर्पणादेर्मयूरदादावुक्तत्वाच्च॥ तर्पणं यथा॥ ब्रह्मादयो ये देवाः॥ तांदेवांस्तर्पयामि॥ भूर्देवा
स्तर्पयामि० भुवर्देवां० स्वर्देवां० भूर्भुवःस्वर्देवां० निवीती॥ कृष्णद्वैपायनादयो ये ऋषयः॥ तानृषीन्० भूर्ऋषीन्० भुवर्ऋषी० स्वर्ऋषी
न्० भूर्भुवःस्वर्ऋषी० प्राचीनावीति सोमः पितृमान्यमोंगिरस्वानग्निष्वात्तादयो ये पितरः तान्पितॄं० भूःपितॄं० भुवःपितॄं० स्वःपितॄंस्त-
भूर्भुवःस्वःपितॄं० ततो यक्ष्मतर्पणादि वासःपरिधानांते तिलकं कृत्वा आचम्य देशकालादि संकीर्त्य विष्णुप्रीत्यर्थं प्रायश्चित्तांगवि-

ष्णुश्राद्धसंपत्तये श्रीविष्णूद्देशेन त्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतं द्रव्यं दातुमहमुत्सृजे ॥ तच्च तुभ्यो ब्राह्मणेभ्यः पूज
नपूर्वकं दद्यात् तेन पापापहा महाविष्णुः प्रीयतां ॥ ततः प्रायश्चित्तं पूर्वांगगोदानं करिष्य इति संकल्प्य ॥ गवामंगेष्विति गोदानं प्रत्य
क्षं द्रव्यद्वारा वा कुर्यात् ॥ देशकालौ संकीर्त्य प्रायश्चित्तपूर्वांगहोमं करिष्ये ॥ तदंगतयास्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनादि करि॰
विटनामानमग्निं प्रतिष्ठापयामीत्यंते ध्यात्वा प्रायश्चित्तपूर्वांगहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये ॥ चक्षुषी आज्येनेत्यंते अ
ग्निं वायुं सूर्यं प्रजापतिं च प्रतिदैवतं सप्तविंशतिसंख्याज्याहुतिभिः पृथिवीं विष्णुं रुद्रं ब्रह्माणं अग्निं सोमं सवितारं प्रजापतिं-
प्रजापतिमग्निं स्विष्टकृतं पंचगव्येन शेषस्विष्टकृतमग्निमिध्यसन्नहनेन रुद्रमित्यादि यद्वा॰ ज्येनेत्यंते पापापहमहाविष्णुं व्याहृतिभि
र ष्टोत्तरशतसंख्याज्याहुतिभिः शेषं समानं ॥ आज्यसंस्कारकाले पंचगव्यं कृत्वा आज्येन सह पर्यग्नि कुर्यात् ॥ ताम्रादिपात्रे पला
शादिपत्रपुटे वा ताम्रायां गोमूत्रं त्रिपलं अष्टमाषं वा गायत्र्यादाय श्वेतगोशकृत् षोडशमाषं गंधद्वारामित्यादाय पीतगोक्षीरं कपि
लं वा सप्तपलं द्वादशमाषं वा ॥ आप्यायस्वेत्यादाय नीलायाः सप्तपलं दशमाषं वा दधि दधिक्राव्णेत्यादाय ॥ कृष्णाया घृतमेकपलं
अष्टमाषं वा तेजोसि शुक्रमसीति वा घृतं मिमिक्ष इति वादाय ॥ यथोक्तगोरभावे गोमात्रस्य मूत्रादि ग्राह्यं ॥ देवस्य त्वेति कुशोदक
मेकपलं चतुर्माषं वा प्रक्षिप्य प्रणवेन यज्ञियकाष्ठेनालोड्य प्रणवेनाभिमंत्रयेत् ॥ आज्यपंचगव्यासादनादि आज्यभागांते भूः
स्वाहा अग्नय इदं ॥ भुवः स्वाहा वायव इदं ॥ स्वः स्वाहा सूर्यायेदं ॥ भूर्भुवः स्वहा प्रजापतय इदं ॥ इत्याज्यस्य प्रतिदैवतं सप्तविं-

शानिरित्येवमष्टोत्तरशताहुतीर्हुत्वा॥ विष्णुपक्षे भूः स्वाहाविष्णवइदं॥ भुवःस्वाहाविष्णवइदं॥ स्वःस्वाहाविष्णवइदं॥ भूर्भुवःस्वाहावि
ष्णवइदं॥ इतिअष्टोत्तरशताहुतीर्हुत्वापंचगव्यहोमः॥ तत्रसाग्रैःसमपत्रकुशैःपंचगव्यंगृहीत्वा॥ इरावतीधेनुमती० स्वाहापृथिव्याइ
दं०१ इदंविष्णु०विष्णवइ०२ मानस्तो०रुद्राये०३ ब्रह्मजज्ञा०ब्रह्मणइ०४ ब्रह्मस्थानेशन्नोदेवीतिमंत्रेणअज्यइतिकेचित्॥ अग्न
येस्वाहाअग्नयइदं॥ सोमायस्वाहासोमायेदं॥ तत्सवितुर्वरेण्यं०सूर्यायेदं०। प्रजापतेन०व्याहृतिभिर्वा० ॐ स्वाहाप्रजापतयइ०अ
ग्नयेस्विष्टकृतेस्वा०॥ अग्नयेस्विष्टकृतइदं॥ इतिदशपंचगव्याहुतीर्हुत्वाकेवलाज्यस्य॥ यदस्येतिस्विष्टकृतंहुत्वाप्रायश्चित्तहोम
शेषंसमाप्य व्रतग्रहणंकरिष्येइतिद्विजान्पृष्ट्वाकुरुष्वेत्यनुज्ञातः॥ यत्त्वगस्थित० ॐ इतिप्रणवेनगृहीत्वाप्रणवेनैवसर्वंपंचगव्यं
पिबेत् अशक्तौगोमूत्रादिस्वल्पंग्राह्यं॥ सर्वस्यपेयत्वात्॥ एतच्चग्रामाद्बहिर्नद्यादेस्तीरेनक्षत्रदर्शनेकार्यम्॥ व्रतानिशास्त्रवेद्या
ह्यंबहिःस्नारकदर्शनइतिस्मृतेः॥ मुमूर्षोस्तुगृहादावेवअस्मिन्दिनेउपवासः॥ अशक्तौहविष्याशनं॥ अयंचपंचगव्यस्यदशाहुतिहो
मोब्रह्मकूर्चाख्यपंचगव्यपानेसर्वत्रोह्यः॥ गृहमागत्यप्रातरारभ्यसंकल्पितप्रायश्चित्तंसंकल्पितप्रत्याम्नायानुसारेणानुष्ठायोत्तरांगा
निकुर्यात्॥ गोनिष्क्रयरजतादिदानपक्षेपंचगव्यप्राशनान्तेइदंसार्द्धाब्देपंचचत्वारिंशत्कृच्छ्रप्रत्याम्नायगोनिष्क्रयीभूतंप्रतिकृच्छ्रं
निष्कतदर्धनदर्धान्यतमप्रमाणंरजतद्रव्यंनानानामगोत्रेभ्योब्राह्मणेभ्यःदातुमहमुत्सृजे॥ इतिद्रव्यदानसंकल्पंकृत्वातदेवद्रव्यंविभ
ज्यदत्वाचोत्तरांगानिकुर्यात्॥ आचीर्णस्यामुकप्रायश्चित्तस्यसांगतार्थमुत्तरांगानिकरिष्ये॥ तत्रहोमंकर्तुंस्थंडिलादिकरिष्येइतिसंक

ल्यपूर्ववदाज्यहोममात्रंव्याहृतिभिः कृत्वा पूर्ववदेवविष्णुश्राद्धंगोदानंचकुर्यात्॥नात्रपंचगव्यहोमः अंतेशक्तेनगोभूहेमादिदशदानानिकार्याणि॥अ
शक्तौहिरण्यदानं॥गृह्याग्निसागरेतस्मिन्नेवदिनेउत्तरांगहोमश्चतस्मिन्नेवाग्नौकार्यइत्येतावन्मात्रमुक्तंतत्रतंत्रप्रयोगः॥पृथक्प्रयोगोवेतिविचा
रणीयं॥ममतुपृथगग्निकरणादियुक्तंभातिकौस्तुभेपूर्वोत्तरांगहोमयोरिध्माधानादिस्थालीपाकतंत्रंकृताकृतमित्युक्तं॥तत्पक्षेआधानांते
न्वाधानपरिसमूहनपरिस्तरणपर्युक्षणाज्यपंचगव्यसंस्कारस्रुवसंमार्गार्चनांतहोमः॥होमांतेस्विष्टकृत्सप्तप्रायश्चित्ताहुतयश्चकृता
कृताः॥परिस्तरणविमोकादिः॥ इतिकाशीनाथोपाध्यायविरचितःसार्धाब्दादिसर्वप्रायश्चित्तप्रयोगः॥ ॥अथविप्रस्त्रियाःप्रायश्चित्तप्र
योगः॥ ॥स्त्रीणांहोमःकृताकृतः॥करणपक्षेविधवायाःक्षौरांतेपूर्ववत्कृत्वाअमंत्रकाणिदशस्नानानि॥सधवायास्तुसंकल्पांतेदं
तधावनंकृत्वातूष्णींदशस्नानानि॥वस्त्रपरिधानांतेविष्णुश्राद्धगोदानेकृत्वाप्रायश्चित्तांगहोमार्थमाचार्यंत्वांवृणे इतिविप्रंवृत्वापू
र्ववत्विप्रद्वारासर्वपूर्वांगंकारयित्वास्वयंपंचगव्यंतूष्णींप्राश्यमुख्यप्रत्याम्नायद्रव्यंविसृज्योत्तरांगानिकारयेत्॥होमाभावपक्षेदशविध
स्नानांतेविष्णुश्राद्धगोदानेकृत्वाविप्रेणपंचगव्यंकारयित्वातूष्णींप्राश्यप्रायश्चित्तद्रव्यंसंकल्प्यदत्वोत्तरांगविष्णुश्राद्धदानदशस्नानानि
कुर्यात्॥अथशूद्रस्यसंकल्पांतमविकृतंप्राग्वत्॥ततःक्षौरांतेअमंत्रकदशस्नानानिवस्त्रतिलकधारणांतेविष्णुश्राद्धगोदानेकृत्वाविप्रद्वारा
पंचगव्यंकारयित्वास्वयंतूष्णींपिबेत्॥शूद्रेणकपिलायाःपंचगव्यानिनपेयानि॥नास्यविप्रद्वारापिहोमःप्रायश्चित्तद्रव्यंसंकल्प्यदत्वाउत्तरां
गविष्णुश्राद्धगोदानानिदशदानानिकुर्यात् इतिस्त्रीशूद्रप्रयोगः अथगोवधाद्येकैकपापेप्रायश्चित्तप्रयोगः॥ पर्षदंप्रदक्षिणीकृत्यसा

ष्ठांगंप्रणमेत्॥विप्रैःकिंतेकार्यंइत्यादिपृष्टेगोवृषनिष्क्रयंसंकल्प्यनिधायमयाऽमुकगोवधः कृतोयवापलांडुगृंजनादिभक्षणंकृतंयद्वामुकस्त्रीगमनं
कृतंतत्प्रायश्चित्तमुपदिशंतुभवंतः॥इतियथापापंउच्चार्यस्पष्टंवदेत्॥ततःसर्वेधर्मविवेक्तारइत्यादिकर्त्रानिबंधपूजानुवादकपूजनेकृतेसभ्याअनुवाद
कमुखेनप्रायश्चित्तंकथयेयुः त्वयामुकगोवधःकृतस्तत्प्रायश्चित्तंत्रैमासिकव्रतंसप्तदशप्राजापत्यप्रत्याम्नायद्वारावासप्तदशगोदानंतन्मूल्यदानेनवापू
र्वोत्तरांगसहितंत्वयाचरितव्यंतेनतवशुद्धिर्भविष्यतीत्यादि॥ यद्वा त्वयामत्याभ्यासेनपलांडुगृंजनंकुक्कुटमांसंवाभक्षितंतत्प्रायश्चित्तंयतिचांद्रायणंपु
नःसंस्कारसहितंप्राच्योदीच्यांगसहितंआचरणीयंतेनतवशुद्धिर्भविष्यतीत्यादि॥एवमगम्यागमनादावूह्यं॥ततःकर्तादेशकालौसंकीर्त्यपर्षदु
पदिष्टंगोवधप्रायश्चित्तंत्रैमासिकंअमुकप्रत्याम्नायेनप्राच्योदीच्यांगसहितमहमाचरिष्ये॥ततोवपनंदंतधावनदशविधस्नानपूर्वांगविष्णुश्राद्ध
गोदानाज्यहोमपंचगव्यप्राशनांतेयथासंकल्पितंमुख्यप्रायश्चित्तंकृत्वोत्तरांगानिकुर्यात्॥इदंसामान्यं॥ततोविशेषोक्तंस्वाभिमतंगोदानपार्वण
श्राद्धादि॥एवमभक्ष्यभक्षणेऽपिपलांडुगृंजनकुक्कुटमांसादिभक्षणजनितपातकनिरासार्थंपर्षदुपदिष्टंपुनःसंस्कारसहितंयतिचांद्रायणंअमुकप्रत्या
म्नायेनप्राच्योदीच्यांगसहितमाचरिष्ये॥इतिसंकल्प्यक्षौरादिपंचगव्यप्राशनादिपूर्ववत्॥कृत्वाचांद्रायणप्रत्याम्नायंपुनरुपनयनंचकृत्वोदीच्यां
गानिकुर्यात्॥एवमगम्यागमनादौद्रष्टव्यम्॥रहस्यप्रायश्चित्तेतुनपर्षदुपस्थानंसभ्यानुवादकपूजनादिकम्॥किंतुतत्प्रायश्चित्तंस्वयमेवज्ञा
त्वाथवाव्याजांतरेणकिंचित्स्पृष्ट्वारहस्योक्तंप्रायश्चित्तंस्वयमेवरहसिसंकल्प्यमहच्चेत्क्षौरसहितमन्यथाक्षौररहितमाचरेदिति॥ ॥इति
श्रीमदनंतोपाध्यायसूनुकाशीनाथोपाध्यायविरचितेसर्वप्रायश्चित्तकृततत्प्रानिपादोक्तप्रायश्चित्तादिप्रयोगसारसंग्रहःसमाप्तः॥ समाप्तम्॥

हें पुस्तक. मुंबईंत विष्णुवासुदेव गोडबोले याणीं छापिलें. शके १७८९ वैशाखशुक्लपक्ष. ७ ७

